Śrī Agamodaya Samiti Series, No 60

# Śrî ÂVAŚYAKA SÛTRA

Part II

WITH

NIRYUKTI (gloss) by ŚRUTAKEVALIN Śrî BHADRABAHUSVÂMIN

ALONG WITH

The Commentary by Śrī Malayagirisûri

Price Rs 2-8-0

Copies 1250 ]

[A D 1932

## ॥ द्वितीयभागः ॥

साम्प्रत समवसरणवक्तव्यतां प्रपञ्चत· प्रतिपिपादयिषुरिमा द्वारगाथामाह—

दाणं च देवमल्ले मल्लाऽऽणयणे उवरि तित्थं ॥ ५४३ ॥
समुसरणे केवइआ रूव पुच्छ वागरण सोअपरिणामे ।

प्रथम समवसरणविषयो विधिर्वक्तव्य', ये देवा यत्प्राकारादि यद्विध यथा कुर्वन्ति तथा वक्तव्यमिति भावः, 'केवइय'त्ति कियन्ति सामायिकानि भगवति कथयति मनुष्यादय' प्रतिपद्यन्ते, कियतो वा भूभागादपूर्वे समवसरणेऽदृष्टपूर्वे वा साधुना आगन्तव्यम्, 'रूव'त्ति भगवतो रूप व्यावर्णनीय, 'पुच्छ'त्ति किमुत्कृष्टरूपतया भगवतः प्रयोजनमिति पृच्छा कार्या उत्तर च वक्तव्यं, कियन्तो वा हृद्गतं सशय पृच्छन्तीति, 'वागरणं'ति व्याकरणं भगवतो वक्तव्यं यथा युगपदेव सङ्ख्यातीतानामपि पृच्छतां व्याकरोतीति, 'पुच्छवागरणं'ति एक वा द्वार, पृच्छाया व्याकरण तद्वक्तव्यं, 'सोयपरिणामो'त्ति श्रोतुश्च परिणामः श्रोतृपरिणामः स वक्तव्यो, यथा सर्वश्रोतृणा भागवती वाक् स्वभाषया परिणमते, 'दानं चे'ति वृत्तिदानं प्रीतिदानं च कियत्प्रयच्छन्ति चक्रवर्त्यादयस्तीर्थंकरप्रवृत्तिकथकेभ्य इति वक्तव्यं, 'देवमल्ले'त्ति गन्धप्रक्षेपाद्देवाना सम्बन्धि माल्यं देवमाल्य-वत्यादि कः करोति, कियत्परिमाणं चेत्यादि, 'मल्लाणयणे'त्ति माल्यानयने यो विधिरसौ वक्तव्यः, 'उवरि तित्थं'ति उपरि पौरुष्याः, किमुक्तं भवति ?–पौरुष्यामतिक्रान्तायां तीर्थमिति–प्रथमगण-

धरोऽन्यो वा तदभावे देशना करोतीत्येष द्वारगाथासमासार्थः । विस्तरार्थं प्रतिद्वारं वक्ष्यामः, तत्र नन्विद समवसरण यत्र भगवान् धर्म्ममाचष्टे तत्र नियमतो भवत्युत नेत्याशङ्कापनोदमुखेन प्रथमद्वारं व्याचिख्यासुरिदमाह—

जत्थ अपुव्वोसरण जत्थ य देवो महड्ढिओ एइ। वाउदयपुप्फवद्दलपागारतिअं च अभिओगा ॥ ५४४ ॥

यत्र क्षेत्रे ग्रामे नगरे वा अपूर्वम्—अभूतपूर्वं समवसरण भवति, यत्र वा भूतपूर्वसमवसरणे क्षेत्रे महर्द्धिको देव एति—आगच्छति, तत्र किमित्याह—वात रेण्वाद्यपनोदाय उदकं (उदक) वार्दलं भाविरेणुसन्तापोपशान्तये, पुष्पवृष्टिनिमित्त वार्दल पुष्पवार्दल तत् क्षितिविभूषणाय, वार्दलशब्द उदकपुष्पयोः प्रत्येकमभिसम्बध्यते, तथा प्राकारत्रिक च, सर्वमेतत् अभियोगमर्हन्तीत्याभियोग्या देवा , कुर्वन्तीति वाक्यशेष , अन्यत्र त्वनियमः ॥ एव तावत् सामान्येन समवसरणकरणविधिरुक्त , सम्प्रति विशेषेण प्रतिपादयति—

मणि—कणग—रयणचित्तं भूमीभाग समंतओ सुरहिं । आजोअणंतरेण करिंति देवा विचित्तं तु ॥ ५४५ ॥

इह यत्र समवसरण भवति तत्र योजनपरिमाण क्षेत्रमाभियोग्या देवा सम्वर्त्तकवात विकुर्वित्वा तेन विशुद्धरजः कुर्वन्ति, तत सुरभिगन्धोदकवृष्ट्या निहतरज , तत आयोजनान्तरेण—योजनपरिमाणं भूमिभाग मणयः—चन्द्रकान्तादय कनक—देवकाञ्चनं रत्नानि—इन्द्रनीलादीनि अथवा स्थलसमुद्भवा मणयो जलसमुद्भवानि रत्नानि तैश्चित्र समन्ततः—सर्वासु दिक्षु सुरभि—सुगन्धिगन्धयुक्त, मणीना सुरभिगन्धोदकस्य पुष्पाणा चातिमनोहारिगन्धयुक्तत्वात्, विचित्रम्—अपूर्वं देवा आभियोग्या कुर्वन्ति ॥

**विटट्ठाइं सुरा्टि जलथलयं दिवकुसुमनीहारिं । पयरिंति समंतेणं दसद्धवन्नं कुसुमवासं ॥ ५४६ ॥**

आभियोग्या देवा प्रकिरन्ति समन्तत'-सर्वासु दिक्षु विदिक्षु च दशार्द्धवर्णं-पञ्चवर्णं कुसुमवर्षं, किंविशिष्टमित्याह-'वृन्तस्थायि' वृन्तमधोभागे पत्राण्युपरीत्येवंस्थानशीलं सुरभिगन्धोपेतत्वात् 'दिव्यकुसुमनिर्हारि' दिव्यः-प्रधान॰ कुसुमाना निर्हारी- प्रबलो गन्धप्रसरो यस्मात् तत् दिव्यकुसुमनिर्हारि ॥

**मणि-कणग-रयणचित्ते, चउद्दिसि तोरणे विउव्विति । सच्छत्तसालिभंजिअमयरद्धयचिंधसंठाणे ॥ ५४७ ॥**

चतसृष्वपि दिक्षु मणिकनकरत्नविचित्राणि तोरणानि व्यन्तरा देवा विकुर्वन्ति, किंविशिष्टानीत्याह—छत्रं-प्रतीतं, शालभञ्जिकाः—स्तम्भपुत्रिका मकरेति-मकरमुखोपलक्षणं ध्वजा'—प्रतीताः चिह्नानि—स्वस्तिकादीनि सस्थानम्—अत्यद्भुतो रचनाविशेषः सन्ति-शोभनानि छत्रशालभञ्जिकामकरध्वजचिह्नसस्थानानि येषु तानि तथोच्यन्ते ।

**तिन्नि य पायारवरे रयणविचित्ते तहि सुरगणिंदा । मणिकंचणकविसीसयविभूसिए ते विउव्वंति ॥५४८॥**

तत्र समवसरणे ते वक्ष्यमाणा॰ सुरगणेन्द्रास्त्रीन् प्राकारवरान् रत्नविचित्रान्-मणिकाञ्चनकपिशीर्षकविभूषितान् विकुर्वन्ति, भावार्थ उत्तरगाथाया व्याख्यास्यते । सा चेयम्—

**अब्भितर मज्झ बहिं विमाणजोइसभवणाहिवकया उ । पायारा तिन्नि भवे रयणे कणगे य रयए य ॥ ५४९ ॥**

अभ्यन्तरे मध्ये बहि॰ विमानज्योतिर्भवनाधिपकृताः प्राकारास्त्रयो भवन्ति, रत्ने कनके रजते च-यथाक्रमं रत्नमयः

कनकमयो रजतमय इत्यर्थ । एष भावार्थ'–अभ्यन्तरः प्राकारो रात्नस्तं विमानाधिपतयः कुर्वन्ति, मध्यमः कनके भव कानक त ज्योतिर्वासिन कुर्वन्ति, बाह्यो राजतस्त भवनपतयः कुर्वन्ति ।

मणिरयणहेमयाऽविय कविसीसा सव्वरयणिया दारा । सव्वरयणामयच्चिय पडागझयतोरणविचित्ता ॥ ५५० ॥

यथाक्रम मणिरत्नहेममयानि कपिशीर्षकाणि, तद्यथा—प्रथमप्राकारे पञ्चवर्णमणिमयानि कपिशीर्षकाणि, तानि वैमानिका कुर्वन्ति, द्वितीये रत्नमयानि तानि ज्योतिष्का विदधते, तृतीये हेममयानि तानि भवनपतयः कुर्वन्ति, तथा सर्वरत्नमयानि द्वाराणि, तानि भुवनपतयः कुर्वन्ति, तथा सर्वरत्नमयान्येव मूलदलापेक्षया पताकाध्वजप्रधानानि तोरणानि विचित्राणि–कनकस्वस्तिकादिभिश्चित्ररूपाणि तानि व्यन्तरदेवा कुर्वन्ति ॥

तत्तो अ समंतेणं कालाऽगुरुकुंदुरुक्कमीसेणं । गंधेण मणहरेणं धूवघडीओ विउव्वंति ॥ ५५१ ॥

तत समन्तत –सर्वासु दिक्षु कृष्णागुरुकुन्दुरुक्कमिश्रेण गन्धेन मनोहारिणा युक्ता॰, किं ?–धूपघटिका विकुर्वन्ति व्यन्तरा देवा' ॥

उक्किट्ठिसीहनायं कलयलसद्देण सव्वओ सव्वं । तित्थयरपायमूले करिंति देवा निवयमाणा ॥ ५५२ ॥

तीर्थकरपादमूले निपतन्तो देवा उत्कृष्टिसिंहनादं कुर्वन्ति, उत्कृष्टिः–हर्षविशेषप्रेरितो ध्वनिविशेषस्तत्प्रधान सिंहनाद उत्कृष्टिसिंहनादस्त, तथा कलकलशब्देन समन्तत –सर्वासु दिक्षु युक्त सर्वमशेषं कुर्वन्ति ॥

चेइदुम पीढछंदय आसण छत्त च चामराओ अ । जं चऽन्न करणिज्ज करिंति तं वाणमंतरिआ ॥ ५५३ ॥

अभ्यन्तरप्राकारस्य रत्नमयस्य बहुमध्यदेशभागे अशोकवरपादपो भवति, स च भगवत्प्रमाणात् द्वादशगुणः, तस्याधस्तात्सर्वरत्नमयं पीठ, तस्य पीठस्योपरि चैत्यवृक्षस्याधो देवच्छन्दकः, तस्याभ्यन्तरे सिंहासनं सपादपीठं स्फटिकमय, तस्योपरि छत्रातिच्छत्रं, चशब्द' समुच्चये, चामरे च उभयो' पार्श्वयो. यक्षहस्तगते, चशब्दात् धर्म्मचक्र पद्मप्रतिष्ठितं, यच्चान्यद्वातोदकादि करणीय तदू व्यन्तरा देवा' कुर्वन्ति, एष सर्वतीर्थकृता सर्वसमवसरणन्यायः, अस्मिंस्तु भगवत. समवसरणेऽशोकपादपं शक्रः छत्रातिच्छत्रमीशानो विकुर्वितवान्, चामरे चामरधारौ वलिचमराविति सम्प्रदायः । आह-यत् यत्समवसरणं भवति तत्र सर्वत्रापि पूर्वोक्त एव नियोग उत नेत्यत आह—

साहारण ओसरणे एवं जत्थिड्ढिमं तु ओसरइ । इक्कु च्चिय तं सव्वं करेइ भयणा उ इयरेसिं ॥ ५५४ ॥

साधारण-सामान्यं यत्र सर्वे देवेन्द्रा आगच्छन्ति तस्मिन् साधारणसमवसरणे एवम्-उक्तप्रकारेण नियोगः, यत्र पुनर्ऋद्धिमान्-इन्द्रसामानिकादि समवतरति तत्र एक एव तत्प्राकारादि सर्वं करोति, 'भयणा उ इयरेसिं'ति यदि इंद्रा इन्द्रसामानिका वा केचिन्महर्द्धिका नायान्ति ततो भवनवास्यादय इतरे समवसरणं कुर्वन्ति वा नवेत्येवं भजना इतरेषा ॥

सूरुदयपच्छिमाए ओगाहंतीइ पुव्वओ एइ । दोहि पउमेहि पाया मग्गेण य हुंति सत्तन्ने ॥ ५५५ ॥

एव देवैर्निष्पादिते समवसरणे, सूर्योदये-प्रथमाया पौरुष्या अन्यदा पश्चिमाया 'ओगाहंतीए'त्ति अवगाहमानाया—आगच्छन्त्यामिति भावः, पूर्वद्वारेण 'एति' आगच्छति, प्रविशतीत्यर्थ., कथमित्याह—द्वयोः पद्मयो.-सहस्रपत्रयोर्देवप-

रिकल्पितयोः पादौ, स्थापयन्निति वाक्यशेषः, 'मग्गेण य होंति सत्तन्ने' मार्गतः—पृष्ठतो भगवतः सप्तान्यानि पद्मानि भवन्ति, तेषां च यत् यत् पश्चिमं तत्पादन्यासं कुर्वतो भगवतः पुरतस्तिष्ठती ति ।

आय हिण पुव्वमुहो तिदिसिं पडिरूवगा उ देवकया । जिट्ठगणी अन्नो वा दाहिणपुव्वे अदूरम्मि ॥ ५५६ ॥

स एव भगवान् पूर्वद्वारेण प्रविश्य 'आयाहिण'त्ति चैत्यद्रुमप्रदक्षिणां कृत्वा पूर्वाभिमुख उपविशति, शेषासु तिसृषु दिक्षु प्रतिरूपकाणि तीर्थकराकृतिमन्ति सिंहासनादियुक्तानि देवकृतानि भवन्ति, शेषदेवादीनामप्यस्माकं कथयतीति प्रतिपत्त्यर्थं, भगवतश्च पादमूलमेकेन गणधरेणाविरहितमेव भवति, स च ज्येष्ठोऽन्यो वा, प्रायो ज्येष्ठ इति भावः, स च ज्येष्ठगणी अन्यो वा दक्षिणपूर्वे दिग्भागे अदूरेऽप्रत्यासन्ने भगवतो भगवन्तं प्रणम्य निषीदतीति क्रियाध्याहारः, शेषगणधरा अप्येवमेव भगवन्तमभिवन्द्य तीर्थस्य मार्गतः पार्श्वतश्च निषीदन्ति ॥ भुवनगुरुरूपस्य त्रैलोक्यगतरूपेभ्यः सुन्दरत्वात् त्रिदशकृतप्रतिरूपकाणां किं साम्यमसाम्यं वेत्याशङ्कानिरासार्थमाह—

जे ते देवेहिं कया तिदिसिं पडिरूवगा जिणवरस्स । तेसिंपि तप्पभावा तयाणुरूवं हवइ रूवं ॥ ५५७ ॥

यानि तानि देवैः कृतानि जिनवरस्य तिसृषु दिक्षु प्रतिरूपकाणि तेषामपि तत्प्रभावात्—तीर्थकरप्रभावात् तदनुरूपं—तीर्थकररूपानुरूपं भवति रूपमिति ॥

तित्थातिसेससंजय देवी वेमाणियाण समणीओ । भवणवइवाणमंतरजोइसियाणं च देवीओ ॥ ५५८ ॥

तीर्थ-(प्रथमो) गणधरः, स पूर्वद्वारेण प्रविश्य तीर्थकरं त्रिकृत्वो वन्दित्वा दक्षिणपूर्वे दिग्भागे निषीदति, एवं शेषगण-

धरा अपि, नवर ते तीर्थस्य मार्गत पार्श्वेपु च निपीदन्ति, तदनन्तर अतिशेपसयता—अतिशायिनः केवल्यादय. सयता
एव निपीदन्ति, किमुक्तं भवति ?—ये केवलिनस्ते पूर्वद्वारेण प्रविश्य भगवन्तं त्रिकृत्व· प्रदक्षिणीकृत्य नमस्तीर्थायेति
भणित्वा तीर्थस्य-प्रथमगणधरस्य शेपगणधराणां च पृष्ठतो निपीदन्ति, येऽप्यवशेपा अतिशायिनो मन पर्यवज्ञानिनो-
ऽवधिज्ञानिनश्चतुर्दशपूर्वधरा त्रयोदशपूर्वधरा यावद्दशपूर्वधरा नवपूर्वधरा खेलौपधय आमर्पौपधयो जल्लौपध्यादयश्च
तेऽपि पूर्वद्वारेण प्रविश्य त्रिकृत्वो भगवन्तं प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय प्रथमगणधररूपाय नमः केवलिभ्य
इत्युक्त्वा केवलिना पृष्ठतो यथाक्रम निपीदन्ति, ये चावशेपा अनतिशायिन· सयता तेऽपि पूर्वद्वारेणैव प्रविश्य त्रिकृत्वो
भगवन्तं प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय नम· केवलिभ्य. नमोऽतिशायिभ्य इत्युक्त्वा अतिशायिना पृष्ठतो निपी
दन्ति, वैमानिकाना देव्य· पूर्वद्वारेणैव प्रविश्य भगवन्त त्रिकृत्व प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय नम· केवलिभ्यः
नमोऽतिशायिभ्य· नम· साधुभ्य इति भणित्वा निरतिशयिसयताना पृष्ठतस्तिष्ठन्ति, नतु निपीदन्ति, श्रमण्य पूर्वद्वारेण
प्रविश्य तीर्थकर त्रिकृत्व· प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय नम केवलिभ्यो नमोऽतिशायिभ्यो नमः शेपसाधुभ्य
इत्युक्त्वा वैमानिकदेवीना पृष्ठतस्तिष्ठन्ति, न तु निपीदन्ति, भवनपवासिन्यो व्यन्तर्यो ज्योतिष्क्यश्च दक्षिणद्वारेण
प्रविश्य त्रिकृत्वस्तीर्थकरं प्रदक्षिणीकृत्य वन्दित्वा दक्षिणपश्चिमाया दिशि, नैर्ऋतकोणे इत्यर्थ·, तिष्ठन्ति, न तु निपी-
दन्ति, भवनवासिनीना पृष्ठतो ज्योतिष्कदेव्यस्तासा पृष्ठतो व्यन्तर्यः । एतदेव सविशेपं प्रतिपिपादयिपुरिदमाह—

केवलिणो तिउण जिणं तित्थपणामं च मग्गओ तस्स । मणमाईवि नमंता वयंति सट्ठाण सट्ठाणं ॥ ५५९ ॥

केवलिनस्त्रिगुण–त्रि प्रदक्षिणीकृत्य जिन–तीर्थंकर तीर्थप्रणामं च कृत्वा तस्य तीर्थस्य–गणधरस्य मार्गतः–पृष्ठतो, निषीदन्ति क्रियाध्याहार', 'मणमाइवी'त्यादि, मनआदयोऽपि–मन·पर्यायज्ञान्यवधिज्ञनिचतुर्दशपूर्वधरा यानक्षवपूर्वधर-खेलौषध्यादिनिरतिशयसयतवैमानिकदेवीश्रमण्यस्तथा ज्योतिष्कभवनपतिव्यन्तरदेव्य' पूर्वक्रमेण तीर्थकरादीन् नमन्त्य प्रजन्ति स्वस्थान स्वस्थान, स्वं स्वं स्थानमित्यर्थ·, भावार्थ प्रागेवोक्त' ।

भवणवई–जोइसिया बोद्धवा वाणमंतरसुरा य । वेमाणिया य मणुआ पयाहिणं जं च निस्साए ॥ ५३० ॥

भवनपतयो ज्योतिष्का व्यन्तरसुरा एते पश्चिमद्वारेण प्रविश्य भगवन्त त्रि· प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय नम· केवलिभ्य नमोऽतिशायिभ्य· नमः शेषसाधुभ्य इति भणित्वा यथोपन्यासमुत्तरपश्चिमे दिग्भागे निषीदन्ति, तद्यथा—भवनपतीना पृष्ठतो ज्योतिष्कास्तेषामपि पृष्ठतो व्यन्तरा इति, तथा वैमानिका मनुष्याश्चशब्दात् स्त्रियश्च, अस्य चशब्दस्य व्यवहित उपन्यासः, किं?, 'पयाहिणं'ति उत्तरद्वारेण प्रविश्य प्रदक्षिणा· कृत्वा तीर्थकरादीनभिवन्द्य उत्तर-पूर्वे दिग्भागे यथोपन्यास निषीदन्ति, तद्यथा—वैमानिकाना पृष्ठतो मनुष्यास्तेषामपि पृष्ठतो मनुष्यस्त्रिय·, इहैव सम्प्रदायः–देव्य· सर्वा एव न निषीदन्ति, देवा मनुष्या मनुष्यस्त्रियश्च निषीदन्ति, तथा विवृत, 'ज च निस्साए' यः परिवारो यं च निश्रा कृत्वा समायात स तत्पार्श्व एव तिष्ठति, नान्यत्र ॥ साम्प्रतमभिहितमेवार्थं भाष्यकार' पूर्वद्वारादिप्रवेशविशिष्टं स्पष्टतर प्रतिपादयति—

सजय वेमाणित्थी सजइ पुवेण पविसिउं वीर । काउं पयाहिणं पुवदक्खिणे ठंति दिसिभाए ॥ ११६ ॥

जोइसियभवणवतरदेवीओ दक्खिणेण पविसेउं । चिट्ठंति दक्खिणावरदिसिम्मि तिगुणं जिणं काउ ॥११७॥
अवरेण भवणवासीवतरजोइससुरा य अतिगतुं । अवरुत्तरदिसिभाए चिट्ठंति जिणं नमसित्ता ॥ ११८ ॥
समहिदा कप्पसुरा राया नरनारिओ उईणेण । पविसित्ता पुव्वुत्तरदिसीइ चिट्ठंति पंजलिया ॥ ११९ ॥
इक्किक्काइ दिसाए तिगं तिगं होइ सनिविट्ठ तु । आइचरिमे विमिस्सा थीपुरिसा सेस पत्तेअं ॥ ५६१ ॥

ज्योतिसयता वैमानिकस्त्रियः सयत्य' पूर्वेण–पूर्वद्वारेण प्रविश्य वीर प्रदक्षिण कृत्वा पूर्वदक्षिणे दिग्भागे तिष्ठन्ति । ज्योतिष्कभवनव्यन्तरदेव्यो दक्षिणेन द्वारेण प्रविश्य त्रिगुण प्रदक्षिण जिन कृत्वा दक्षिणापरदिग्भागे पूर्वक्रमेण तिष्ठन्ति । अपरेण–पश्चिमद्वारेण भवनवासिनो व्यन्तरा ज्योतिष्कसुराश्च अतिगत्य–प्रविश्य जिन नमस्कृत्यापरोत्तरदिग्भागे, वायव्यकोणे इत्यर्थ, पूर्वक्रमेण तिष्ठन्ति ॥ समहेन्द्रा–महर्द्धिभिरिन्द्रै. सहिता' कल्पसुरा'–कल्पोपपन्नदेवाः राजानः नराः सामान्यपुरुषा नार्यश्च उदीच्येन–उत्तरेण द्वारेण प्रविश्य भगवन्तं प्रणम्य प्राञ्जलयः पूर्वोत्तरदिग्भागे तिष्ठन्ति । अभिहितार्थोपसङ्ग्रहमाह—एकैकस्या पूर्वदक्षिणादिकाया दिशि त्रिक त्रिकं भवति सन्निविष्टं, तद्यथा–पूर्वदक्षिणस्या सयतवैमानिकदेवीश्रमणीरूप, दक्षिणापरस्या भवनवासिज्योतिष्कव्यन्तरदेवीरूपं, अपरोत्तरस्या भवनपतिज्योतिष्कव्यन्तरदेवरूपं, उत्तरपूर्वस्या वैमानिकमनुष्यमनुष्यस्त्रीरूपमिति, आदिमे च त्रिके–पूर्वदक्षिणदिग्गते चरमे च त्रिके–पूर्वोत्तरदिग्गते विमिश्रा भवन्ति, स्त्रिय. पुरुषाश्च तिष्ठन्तीति भावः, शेषे–त्रिकद्वये प्रत्येक भवति, अपरादक्षिणे दिग्भागे केवलाःस्त्रिय एव अपरोत्तरे च दिग्भागे केवला पुरुषा एवेति भावार्थः । तेषा चेत्थं स्थिताना देवनराणामियं मर्यादा,

केवलिनस्त्रिगुणं–त्रि प्रदक्षिणीकृत्य जिन–तीर्थंकर तीर्थप्रणामं च कृत्वा तस्य तीर्थस्य–गणधरस्य मार्गत'–पृष्ठतो, निषीदन्ति क्रियाध्याहार, 'मणमाइवी'त्यादि, मनआदयोऽपि–मन'पर्यायज्ञान्यवधिज्ञनिचतुर्दशपूर्वधरा यानभवपूर्वधरखेलौषध्यादिनिरतिशयसयतवैमानिकदेवीश्रमण्यस्तथा ज्योतिष्कभवनपतिव्यन्तरदेव्य· पूर्वक्रमेण तीर्थकरादीन् नमन्त्य व्रजन्ति स्वस्थान स्वस्थान, स्वं स्व स्थानमित्यर्थ, भावार्थ प्रागेवोक्त' ।

भवणवई–जोइसिया बोद्धवा वाणमंतरसुरा य । वेमाणिया य मणुआ पयाहिणं जं च निस्साए ॥ ५६० ॥

भवनपतयो ज्योतिष्का व्यन्तरसुरा एते पश्चिमद्वारेण प्रविश्य भगवन्त त्रि' प्रदक्षिणीकृत्य वन्दित्वा नमस्तीर्थाय नम केवलिभ्य नमोऽतिशायिभ्य· नम' शेषसाधुभ्य इति भणित्वा यथोपन्यासमुत्तरपश्चिमे दिग्भागे निषीदन्ति, तद्यथा—भवनपतीना पृष्ठतो ज्योतिष्कास्तेषामपि पृष्ठतो व्यन्तरा इति, तथा वैमानिका मनुष्याश्चशब्दात् स्त्रियश्च, अस्य चशब्दस्य व्यवहित उपन्यास, किं?, 'पयाहिणं'ति उत्तरद्वारेण प्रविश्य प्रदक्षिणा कृत्वा तीर्थकरादीनभिवन्द्य उत्तरपूर्वे दिग्भागे यथोपन्यास निषीदन्ति, तद्यथा—वैमानिकाना पृष्ठतो मनुष्यास्तेषामपि पृष्ठतो मनुष्यस्त्रिय·, इहैव सम्प्रदाय–देव्य सर्वा एव न निषीदन्ति, देवा मनुष्या मनुष्यस्त्रियश्च निषीदन्ति, तथा विवृत, 'जं च निस्साए' यः परिवारो यं च निश्रा कृत्वा समायातः स तत्पार्श्व एव तिष्ठति, नान्यत्र ॥ साम्प्रतमभिहितमेवार्थं भाष्यकार पूर्वद्वारादिप्रवेशविशिष्टं स्पष्टतर प्रतिपादयति—

सजय वेमाणित्थी सजइ पुव्वेण पविसिउं वीर । काउं पयाहिणं पुव्वदक्खिणे ठंति दिसिभाए ॥ ११६ ॥

न तच्च यद्भगवति कथयति अन्यतमोऽप्यन्यत् सामायिक न प्रतिपद्यत इति, भविष्यत्कालनिर्देशस्त्रिकालोपलक्षक· । अथ कियन्ति सामायिकानि मनुष्यादयः प्रतिपद्यन्त इत्येतदाह—

मणुए चउमन्नयर तिरिए तिन्नि व दुवे व पडिवज्जे । जइ नत्थि नियमसुच्चिय सुरेसु संमत्तपडिवत्ती ॥ ५६५ ॥

मनुष्ये प्रतिपत्तरि चतुर्णां सामायिकानामन्यतरत्—अन्यतरसामायिकप्रतिपत्तिर्भवति, पाठान्तर 'मणुओ चउमन्नयर' तत्र मनुष्यश्चतुर्णामन्यतरत् प्रतिपद्यते इति व्याख्येयं, तिर्यक् त्रीणि वा सर्वविरतिवर्जानि द्वे वा सम्यक्त्वश्रुतसामायिके प्रतिपद्यते, यदि नास्ति मनुष्यतिरश्चा कश्चित् प्रतिपत्ता ततो नियमत एव सुरेपु सम्यक्त्वप्रतिपत्तिर्भवति । स च भगवानित्थ धर्ममाचष्टे—

तित्थपणामं काउ कहेइ साहारणेण सद्देण । सव्वेसि संनीणं जोअणनीहारिणा भयवं ॥ ५६६ ॥

नमस्तीर्थाय प्रवचनरूपायेत्यभिधाय प्रणाम च कृत्वा कथयति, प्रतिपत्तिमङ्गीकृत्य साधारणेन शब्देन—अर्द्धमागधभापात्मकेन, केपा साधारणेनेत्याह—सर्वेपाम्—अमरनरतिरश्चा सज्ञिना, किंविशिष्टेन ?—योजननिर्हारिणा—योजनव्यापिना भगवान्, किमुक्तं भवति?—भगवतो ध्वनिरशेपसमवसरणस्थसज्ञिजिज्ञासितार्थप्रतिपत्तिनिवन्धन भवति, भगवतः सातिशयत्वादिति । ननु कृतकृत्यो भगवान् तत· किमिति तीर्थप्रणामं करोति ?, उच्यते—

तप्पुव्विआ अरिहया पूइअपूया य विणयकम्मं च । कयकिच्चोऽवि जह कहं कहेइ नमए तहा तित्थं ॥ ५६७ ॥

तत्पूर्विका—प्रवचनरूपतीर्थपूर्विका अर्हत्ता—तीर्थकरता, प्रवचनविपयाभ्यासवशतस्तीर्थकरत्वप्राप्तेः, यश्च यत उपजा-

इंतं महिड्ढिअं पणिवयंति ठियमवि वयंति पणमंता । नवि जंतणा न विकहा न परुप्पर मच्छरो न भयं ५६२

ये अल्पर्द्धयो भगवत' समवसरणे पूर्वनिषण्णास्ते आगच्छन्तं महर्द्धिकं प्रणिपतन्ति, अथ महर्द्धिका' प्रथमं समवसरणे निषण्णास्ततः पश्चात् ये अल्पर्द्धिकाः समागच्छन्ति ते तान् पूर्वस्थितान् महर्द्धिकान् प्रणिपतन्तो व्रजन्ति, तथा तेषां नाऽपि तथास्थिताना यन्त्रणा–आयत्तता नापि विकथा न च परस्पर मत्सरो, नापि विरोधिनामपि सत्त्वाना परस्पर भयं च, भगवतोऽनुभावात् ॥ एतत्सर्वं प्रथमप्राकारान्तरे व्यवस्थितम्, अथ द्वितीयप्राकारान्तरे तृतीयप्राकारान्तरे च किं व्यवतिष्ठते इत्याह—

बिइयम्मि हुंति तिरिया तइए पायारमंतरे जाणा । पायारजढे तिरियावि हुंति पत्तेअ मिस्सा वा ॥ ५६३ ॥

द्वितीयप्राकारान्तरे भवन्ति तिर्यञ्च, तथा तृतीयप्राकारान्तरे यानानि, प्राकारजढे–प्राकाररहिते बहिरित्यर्थ, तिर्यञ्चोऽपि भवन्ति, अपिशब्दात् मनुष्यदेवा अपि, ते च प्रत्येकं कदाचिद्भवन्ति–कदाचित्तिर्यञ्च एव कदाचिन्मनुष्या एव कदाचिद्देवा एव, तथा कदाचिन्मिश्रा वा, एते च प्रत्येकं मिश्रा वा प्रविशन्तो निर्गच्छन्तश्च वेदितव्या ॥ गत समवसरणद्वारम्, अधुना द्वितीयद्वारप्रतिपादनार्थमाह—

सव्वं च देसविरइं सम्मं घेच्छइ व होइ कहणा उ । इहरा अमूढलक्खो न कहेइ भविस्सइ न तं च ॥ ५६४ ॥

विरतिशब्द उभयत्रापि सम्बध्यते, सर्वं–सर्वविरति देशविरति सम्यक्त्व वा ग्रहीष्यति, वाशब्दस्य व्यवहित सम्बन्ध, ततः कथना कथन भगवत प्रवर्त्तते, 'इहर'त्ति इतरथा अमूढलक्ष्या समस्तज्ञेयाविपरीतवेदना, किं ?—न कथयति । आह—यद्येव समवसरणकरणप्रयासो विबुधानामनर्थक, कृतेऽपि नियमतोऽकथनादित्यत आह—भविष्यति

भविष्यत्कालनिर्देशस्त्रिकालोपलक्षक । न तच्च यद्भगवति कथयति अन्यतमोऽप्यन्यत् सामायिक न प्रतिपद्यत इति,

अथ कियन्ति सामायिकानि मनुष्यादयः प्रतिपद्यन्त इत्येतदाह—

मणुए चउमन्नयर तिरिए तिन्नि व दुवे व पडिवज्जे । जइ नत्थि नियमसुच्चिय सुरेसु संमत्तपडिवत्ती ॥ ५६५ ॥

मनुष्ये प्रतिपत्तरि चतुर्णां सामायिकानामन्यतरत्—अन्यतरसामायिकप्रतिपत्तिर्भवति, पाठान्तर 'मणुओ चउमन्नयर' तत्र मनुष्यश्चतुर्णामन्यतरत् प्रतिपद्यते इति व्याख्येय, तिर्यक् त्रीणि वा सर्वविरतिवर्जानि द्वे वा सम्यक्त्वश्रुतसामायिके प्रतिपद्यते, यदि नास्ति मनुष्यतिरश्चा कश्चित् प्रतिपत्ता ततो नियमत एव सुरेषु सम्यक्त्वप्रतिपत्तिर्भवति । स च भगवानित्थ धर्म्ममाचष्टे—

तित्थपणामं काउं कहेइ साहारणेण सद्देण । सव्वेसिं संनीणं जोअणनीहारिणा भयवं ॥ ५६६ ॥

नमस्तीर्थाय प्रवचनरूपायेत्यभिधाय प्रणाम च कृत्वा कथयति, प्रतिपत्तिमङ्गीकृत्य साधारणेन शब्देन—अर्द्धमागधभाषात्मकेन, केषा साधारणेनेत्याह—सर्वेषाम्—अमरनरतिरश्चा सज्ञिना, किंविशिष्टेन ?—योजननिर्हारिणा—योजनव्यापिना भगवान्, किमुक्तं भवति ?—भगवतो ध्वनिरशेषसमवसरणस्थसज्ञिजिज्ञासितार्थप्रतिपत्तिनिबन्धन भवति, भगवतः सातिशयत्वादिति । ननु कृतकृत्यो भगवान् ततः किमिति तीर्थप्रणामं करोति ?, उच्यते—

तप्पुव्विआ अरिहया पूइअपूया य विणयकम्मं च । कयकिच्चोऽवि जह कहं कहेइ नमए तहा तित्थं ॥ ५६७ ॥

तत्पूर्विका—प्रवचनरूपतीर्थपूर्विका अर्हत्ता—तीर्थकरता, प्रवचनविषयाभ्यासवशतस्तीर्थकरत्वप्राप्तेः, यश्च यत उपजा-

यते स त प्रणमतीति भगवान् तीर्थं प्रणमति, तथा पूजितेन पूजा पूजितपूजा सा चास्य कृता भवति, पूजितपूजको हि लोक, भगवांश्च जगत्रयेऽपि पूज्य, ततो यदि भगवता पूजित भवति ततः सकलेऽपि जगति तत्पूजित भवतीति प्रणमति, तथा विनयकर्म्म च वक्ष्यमाणवैनयिकधर्म्ममूलं कृत भवति, किमुक्त भवति ?–विनयमूलो धर्म्मो भगवता प्रज्ञापनीय, तद् यदि प्रथम स्वयमेव भगवान् विनय प्रयुङ्क्ते ततो लोक सम्यग्विनयं प्रज्ञाप्यमानं श्रद्धत्ते करोति च, अथवा यथा कृतकृत्योऽपि भगवान् कथा कथयति तथा तीर्थमपि नमति, आह–नन्विदमपि धर्म्मकथनं भगवत कृतकृत्यस्यायुक्तमेव, न, तस्य तीर्थकरनामकर्म्मविपाकप्रभवत्वात्, उक्त च प्राक् 'तं च कह वेइज्जइ' इत्यादि । आह–क केन साधुना कियतो वा भूभागात् समवसरणे खल्वागन्तव्यम् ? अनागच्छतो वा किं प्रायश्चित्तमित्यत आह–

जत्थ अपुव्वोसरणं अदिट्ठपुव्वं च जेण समणेणं । बारसहि जोअणेहिं सो एइ अणागए लहुआ ॥ ५६८ ॥

यत्र तत्तीर्थकरापेक्षया अपूर्वम्–अभूतपूर्व समवसरण न दृष्टपूर्व वा येन श्रमणेन स द्वादशभ्यो योजनेभ्य आगच्छति, अथ नागच्छति अवज्ञया ततोऽनागते सति 'लहुय'त्ति चतुर्लघव प्रायश्चित्तम् ॥ गत केवइअत्ति द्वारम्, अधुना रूपपृच्छाद्वारप्रकटनार्थमाह–

सव्वसुरा जइ रूवं अंगुट्ठपमाणयं विउव्विज्जा । जिणपायंगुट्ठं पइ न सोहए तं जहिंगालो ॥ ५६९ ॥

अथ कीदृग्भगवतो रूप ?, उच्यते– सर्वे सुरा अशेषसुन्दररूपनिर्मापणशक्त्या यदि अङ्गुष्ठप्रमाणक रूप विकुर्वीरन् तथापि तज्जिनपादाङ्गुष्ठ प्रति न शोभते यथाऽङ्गार ॥ साम्प्रत प्रसङ्गतो गणधरादीना रूपसम्पदमभिधित्सुराह–

गणहर आहार अणुत्तरा य जाव वण-चक्कि वासु-वला । मंडलिया जा हीणा छट्ठाणगया भवे सेसा ॥ ५७० ॥

तीर्थकररूपात् गणधराणा रूपमनन्तगुणहीन भवति, तीर्थकरेभ्यो गणधरा रूपेणानन्तगुणहीना भवन्तीति भाव', गणधरेभ्यो रूपेण खलु आहारकदेहा अनन्तगुणहीना· आहारकदेहेभ्यो रूपेणानन्तगुणहीना अनुत्तरा'— अनुत्तरवैमानिका, एव ग्रैवेयकाच्युतारणप्राणतानतसहस्रारमहाशुक्रलान्तकब्रह्मलोकमाहेन्द्रसनत्कुमारेशानसौधर्मभवनवासिज्योतिष्कव्यन्तरचक्रवर्त्तिवासुदेवबलदेवमहामाण्डलिकानामनन्तरानन्तरापेक्षया रूपेणानन्तगुणहानिरवगन्तव्या, तथा चाह— 'जाव वणचक्किवासुवला मडलिया जा हीण'त्ति यावद् व्यन्तरचक्रवर्त्तिवासुदेवबलदेवमाण्डलिकाः तावदनन्तगुणहीना', 'छट्ठाणगया भवे सेस'त्ति शेषा—राजानो जनपदलोकाश्च षट्स्थानगता भवन्ति, अनन्तभागहीना वा असङ्ख्येयभागहीना वा सङ्ख्येयभागहीना वा सङ्ख्येयगुणहीना वा असङ्ख्येयगुणहीना वा अनन्तगुणहीना वा इति ॥ उत्कृष्टरूपताया भगवतः प्रतिपादयितु प्रक्रान्तायामिद प्रासङ्गिक रूपसौन्दर्यनिबन्धन सहननादि प्रतिपादयन्नाह—

सघयण रूवं संठाण वन्नगइसत्तसारऊसासा । एमाइऽणुत्तराइं हवंति नामोदया तस्स ॥ ५७१ ॥

सहनन—वज्रर्षभनाराचं रूपमुक्तलक्षण सस्थानं—समचतुरस्रं वर्णो—देहच्छाया गति· गमन सत्त्वं—वीर्यान्तरायकर्म्मक्षयोपशमादिजन्य आत्मपरिणाम', सारो द्विधा—बाह्य आन्तरश्च, बाह्यो गुरुत्वं आन्तरो ज्ञानादि, उच्छ्वास· प्रतीत', तत एतेषा पदाना द्वन्द्व', एवमादीनि वस्तूनि, आदिशब्दात् रुधिर गोक्षीराभमित्यादिपरिग्रहः, अनुत्तराणि तस्य भग-

यते स त प्रणमतीति भगवान् तीर्थं प्रणमति, तथा पूजितेन पूजा पूजितपूजा सा चास्य कृता भवति, पूजितपूजको हि लोक, भगवाश्च जगत्रयेऽपि पूज्य, ततो यदि भगवता पूजित भवति ततः सकलेऽपि जगति तत्पूजित भवतीति प्रणमति, तथा विनयकर्म्म च वक्ष्यमाणवैनयिकधर्म्ममूलं कृत भवति, किमुक्त भवति ?–विनयमूलो धर्म्मो भगवता प्रज्ञापनीय, तद् यदि प्रथम स्वयमेव भगवान् विनय प्रयुङ्क्ते ततो लोकः सम्यग्विनयं प्रज्ञाप्यमानं श्रद्धत्ते करोति च, अथवा यथा कृतकृत्योऽपि भगवान् कथा कथयति तथा तीर्थमपि नमति, आह–नन्विदमपि धर्म्मकथनं भगवत कृतकृत्यस्यायुक्तमेव, न, तस्य तीर्थकरनामकर्म्मविपाकप्रभवत्वात्, उक्त च प्राक् 'तं च कह वेइज्जइ' इत्यादि । आह–क केन साधुना कियतो वा भूभागात् समवसरणे खल्वागन्तव्यम् ? अनागच्छतो वा किं प्रायश्चित्तमित्यत आह—

जत्थ अपुव्वोसरणं अदिट्ठपुव्वं च जेण समणेणं । बारसहिँ जोअणेहिं सो एइ अणागए लहुआ ॥ ५६८ ॥

यत्र तत्तीर्थकरापेक्षया अपूर्वम्–अभूतपूर्वं समवसरण न दृष्टपूर्वं वा येन श्रमणेन स द्वादशभ्यो योजनेभ्य आगच्छति, अथ नागच्छति अवज्ञया ततोऽनागते सति 'लहुय'त्ति चतुर्लघव प्रायश्चित्तम् ॥ गत केवइअत्ति द्वारम्, अधुना रूपपृच्छाद्वारप्रकटनार्थमाह–

सव्वसुरा जइ रूवं अंगुट्ठपमाणयं विउव्विज्जा । जिणपायंगुट्ठं पइ न सोहए तं जहिंगालो ॥ ५६९ ॥

अथ कीदृग्भगवतो रूपं ?, उच्यते– सर्वे सुरा अशेषसुन्दररूपनिर्मापणशक्त्या यदि अङ्गुष्ठप्रमाणक रूप विकुर्वीरन् तथापि तज्जिनपादाङ्गुष्ठ प्रति न शोभते यथाऽङ्गार ॥ साम्प्रत प्रसङ्गतो गणधरादीना रूपसम्पदमभिधित्सुराह—

यदि धर्म तत स शेषै' सुतरा कर्त्तव्य इति श्रोतृबुद्धे' प्रवर्त्तनम्, तथा ग्राह्यवाक्यश्च-आदेयवाक्यश्च सुरूपो भवति, चशब्दात् श्रोतॄणां रूपाद्यभिमानापहारी च, अत एतैः कारणैर्भगवतो रूप प्रशसामः, अथवा पृच्छेति भगवान् देवनरतिरश्चा प्रभूतसशयिना कथ व्याकरण कुर्वन् संशयविच्छित्ति करोति ?, उच्यते-युगपत्, किमित्याह—

कालेण असंखेणवि सखाईयाण ससईणं तु । मा ससयवुच्छित्ती न हुज्ज कमवागरणदोसा ॥ ५७८ ॥

यदि एकैकस्य परिपाट्या एकैकं सशय परिच्छिन्द्यात् ततः सङ्ख्यातीताना देवाना सशयिनामसङ्ख्येनापि कालेन संशयविच्छित्तिर्न स्यात्, कुत इत्याह—क्रमेण व्याकरण क्रमव्याकरण स एव दोषः क्रमव्याकरणदोषस्तस्मात्, ततो युगपद् व्याकरोति ॥ युगपद्व्याकरणे गुणमुपदर्शयति—

सव्वत्थवि अ समत्त रिद्धिविसेसो अकालहरण च । सव्वन्नुपच्चओऽवि अ अचिंतगुणभूइओ जुगवं ॥ ५७९ ॥

सर्वत्र-सर्वसत्त्वेषु समत्वम्-अविषमत्वं युगपत्कथनेन भगवतो रागद्वेषरहितस्य प्रथितं भवति, अन्यथा तुल्यकालसशयिना युगपज्जिज्ञासुतयोपस्थिताना कालभेदकथने रागेतरगोचरचित्तवृत्तिप्रसङ्गः, सामान्यकेवलिना तत्प्रसङ्ग इति चेत्, न, तेषामित्थं देशनाकरणायोगात्, तथा ऋद्धिविशेष एव भगवतः प्रथितो भवति, यत् युगपत् सर्वेषामेव सशयिनामशेषसशयव्यवच्छित्ति करोति, तथा अकालहरणं भवति, भगवता युगपत्संशयापनोदात्, क्रमेण कथने तु कस्यचित्संशयिनोऽनिवृत्तसंशयस्यैव मरण स्यात्, न च भगवन्तमप्यवाप्य संशयनिवृत्त्यादिफलरहिताः प्राणिनो भवन्तीति युक्तं, सर्वज्ञप्रत्ययोऽपि तेषामेवमुपजायते, यथा सर्वज्ञोऽयं हृद्गताशेषसंशयापनोदात्, न खल्वसर्वज्ञ एककालमशेषसंशयापनो-

यतो नामोदयात्-कर्मोदयाद्भवन्ति ॥ आह—अन्यासा प्रकृतीना वेदना (त्) गोत्रादयो नाम्नो वा ये इन्द्रियादय प्रशस्ता उदया भवन्ति ते किमनुत्तरा भगवतश्छद्मस्थकाले केवलिकाले वा भवन्ति ? कि वा नेति, उच्यते—

पगडीण अन्नासुवि पसत्थ उदया अणुत्तरा हुंति । खयउवसमेवि अ तहा खयम्मि अविकप्पमाहंसु ॥५७२॥

'अन्नासुवि'त्ति षष्ठ्यर्थे सप्तमी, अन्यासामपि प्रकृतीना अपिशब्दान्नाम्नोऽपि प्रशस्ता उदया—उच्चैर्गोत्रादयो भवन्ति, किमितरजनस्येव ?, नेत्याह—अनुत्तरा—अनन्यसदृशा इत्यर्थः, 'खओवसमेऽविय'त्ति क्षयोपशमे सति ये दानलाभादय कार्यविशेषा अपिशब्दादुपशमेऽपि ये केचन तेऽप्यनुत्तरा भवन्तीति क्रियायोग, तथा कर्म्मण क्षये—आत्यन्तिकप्रक्षये सति क्षायिकज्ञानादिगुणसमुदयमविकल्पं—व्यावर्णनादिकल्पनातीतं सर्वोत्तममाख्यातवन्तस्तीर्थकरगणधरा ॥ आह—असातवेदनीयाद्या प्रकृतयो नाम्नो वाऽप्रशस्ता कथ तस्य दु खदा न भवन्ति ?, उच्यते—

अस्सायमाइआओ जाविअ असुहा हवंति पयडीओ । निंबरसलवुव्व पए न हुंति ता असुहया तस्स ॥५७३॥

असाताद्या या अपिच प्रकृतय. अशुभा भवन्ति ता अपि 'निम्बरसलव' इव लवो—बिन्दुः पयसि—क्षीरे, न भवन्ति, असुखदास्तस्य—भगवत' तीर्थकृत' ॥ उक्तमानुषङ्गिकं, प्रकृत द्वारमधिकृत्य प्रोच्यते—तत्र कश्चिदाह—उत्कृष्टरूपतया भगवतः कि प्रयोजनम् ?, अत आह—

धम्मोदएण रूवं करिंति रूवस्सिणोऽवि जइ धम्मं । गेज्झवओ अ सुरूवो पससिमो तेण रूवं तु ॥ ५७४ ॥

धर्मस्योदयो धर्म्मोदयस्तेन रूप भवतीति श्रोतारोऽपि धर्म्मे प्रवर्त्तन्ते, तथा कुर्वन्ति रूपस्विनोऽपि—रूपवन्तोऽपि

गहाय ओगाहंतीए पोरसीए आगच्छति, कालो य जेट्ठमासो, अह ताए थेरीए कट्ठभारातो एग कट्ठ पडिय, ततो ताए ओणमित्ता त गहियं, तसमयं च जोयणनीहारिणा सरेण भयव तित्थयरो धम्म कहेइ, सा थेरी तं सद्द सुणंती तहेव ओणया सोउमाढत्ता, उण्ह खुह पिवास परिस्सम च न विदइ, सूरत्थमणे तित्थयरो धम्मं कहित्ता उट्ठितो, थेरी गया। एवम्—

सव्वाउअपि सोआ झविज्ज जइ हु सययं जिणो कहए। सीउण्हखुप्पिवासापरिस्समभएऽवि अविगणंतो ॥ ५७९ ॥

भगवति कथयति भगवत्समीपवर्त्त्येव सन् सर्वायुष्कमपि श्रोता क्षपयेत् यदि हु सततम्–अनवरतं जिन कथयेत्, किंविशिष्ट सन् इत्याह—शीतोष्णक्षुत्पिपासापरिश्रमभयान्यविगणयन् ॥ गतं श्रोतृपरिणामद्वारम्, सम्प्रति दानद्वार भाव्यते–तत्र भगवान् येषु ग्रामनगरादिषु विहरति तेभ्यो वार्त्तां ये खल्वानयन्ति तेभ्यो यत् प्रयच्छन्ति वृत्तिदानं प्रीतिदानं च चक्रवर्त्यादयस्तदुपदर्शयन्नाह—

वित्ती उ सुवन्नस्सा बारस अद्धं च सयसहस्साइं। तावइयं चिय कोडी पीईदाणं तु चक्कीणं ॥ ५८० ॥

वृत्तिस्तु–वृत्तिरेव नियुक्तपुरुषेभ्य सुवर्णस्य द्वादश शतसहस्राणि अर्द्धं च, अर्द्धत्रयोदश सुवर्णलक्षा इत्यर्थः, चक्रवर्त्तिना दीयते, तथा एतावत्य एव कोट्यः प्रीतिदानं चक्रवर्तिन, तत्र वृत्तिर्या कालमानेन परिभाषिता नियुक्तपुरुषेभ्यो दीयते, प्रीतिदानं यद्भगवदागमने निवेदिते परमहर्षान्नियुक्तेतरेभ्यो दीयते, तथा वृत्तिः सवत्सरनियता, प्रीतिदानमनियतमिति ॥

एयं चेव पमाणं नवर रययं तु केसवा दिंति। मंडलियाण सहस्सा वित्ती पीई सयसहस्सा ॥ ५८१ ॥

दायालमिति, क्रमव्याकरणे तु कस्यचिदनपेतसंशयस्य सर्वज्ञप्रतीत्यभावः स्यात्, तथा अचिन्त्यगुणभूति'—अचिन्त्या गुणसम्पद्भगवत स्वाभाविकी, ततो यस्मादेते गुणा अतो युगपत् कथयति ॥ गतं पृच्छाद्वारमधुना श्रोतृपरिणाम पर्यालोच्यते, तत्र यथा सर्वसंशयिना सा पारमेश्वरी वाग् अशेषसंशयोन्मूलनेन स्वभाषया परिणमते तथा प्रतिपादयति—

वासोदगस्स व जहा वन्नाई हुंति भायणविसेसा । सव्वेसिपि सभास जिणभासा परिणमे एवं ॥ ५७७ ॥

वर्षोदकस्य—वृष्ट्युदकस्य वाशब्दादन्यस्य वा यथैकरूपस्य सतो भाजनविशेषात् वर्णादयो भवन्ति, कृष्णसुरभिमृत्तिकाया स्वच्छ सुगन्धि रसवच्च भवति, ऊषरे तु विपरीतम्, एवं सर्वेषामपि श्रोतृणा स्वभाषया जिनभाषा परिणमते ॥ तीर्थकरवाच सौभाग्यगुणप्रतिपादनार्थमाह—

साहारणासवत्ते तदुवओगो उ गाहगगिराए । न य निव्विज्जइ सोआ किढिवाणियदासिआहरणा ॥ ५७८ ॥

साधारणा भगवतो वाणी अनेकप्राणिषु स्वभाषात्वेन परिणमनात्, नरकादिभयरक्षणपरत्वात् असपत्ना—असदृशी अद्वितीया, साधारणा चासौ असपत्ना च साधारणासपत्ना तस्या साधारणासपत्नाया सत्या, तस्यामुपयोगस्तदुपयोग एव भवति श्रोतु', तुशब्दस्यावधारणार्थत्वात्, कस्या ?—ग्राहयतीति ग्राहका सा चासौ गीश्च ग्राहकगीस्तस्या ग्राहकगिरि, उपयोगे सत्यपि अन्यत्र निर्वेदो दृश्यते, तत आह—न च निर्विद्यते श्रोता, कथमर्थ खल्ववगन्तव्य इत्याह—किढिवणिग्दास्युदाहरणात्। तच्चेदम्— एगस्स वाणियस्स एगा किढी दासी, किढी नाम थेरी, सा गोसे कट्ठाणं गया, तण्हाछुहाकिलंता मज्झण्हे आगया, अतिथोवाणि कट्ठाणि आणियाणित्ति पिट्टित्ता भुक्खियतिसिया पुणो पट्ठविया, सा य वड्डु कट्ठभार

गहाय ओगाहतीए पोरसीए आगच्छति, कालो य जेट्ठमासो, अह ताए थेरीए कट्ठभारातो एग कट्ठ पडिय, ततो ताए ओणमित्ता त गहियं, तसमय च जोयणनीहारिणा सरेण भयवं तित्थयरो धम्म कहेइ, सा थेरी तं सद्द सुणंती तहेव ओणया सोउमाढत्ता, उण्ह खुह पिवास परिस्सम च न विदइ, सूरत्थमणे तित्थयरो धम्मं कहित्ता उट्ठितो, थेरी गया। एवम्—

सव्वाउअपि सोआ झविज्ज जइ हु सययं जिणो कहए। सीउण्हखुप्पिवासापरिस्समभएऽवि अविगणंतो ॥ ५७९ ॥

भगवति कथयति भगवत्समीपवर्त्त्येव सन् सर्वायुष्कमपि श्रोता क्षपयेत् यदि हु सततम्—अनवरत जिन कथयेत्, किंविशिष्ट सन् इत्याह—शीतोष्णक्षुत्पिपासापरिश्रमभयान्यविगणयन् ॥ गतं श्रोतृपरिणामद्वारम्, सम्प्रति दानद्वार भाण्यते—तत्र भगवान् येषु ग्रामनगरादिषु विहरति तेभ्यो वार्त्तां ये खल्वानयन्ति तेभ्यो यत् प्रयच्छन्ति वृत्तिदानं प्रीतिदानं च चक्रवर्त्यादयस्तदुपदर्शयन्नाह—

वित्ती उ सुवन्नस्सा बारस अद्धं च सयसहस्साइं। तावइयं चिय कोडी पीईदाणं तु चक्कीणं ॥ ५८० ॥

वृत्तिस्तु—वृत्तिरेव नियुक्तपुरुषेभ्य' सुवर्णस्य द्वादश शतसहस्राणि अर्द्धं च, अर्द्धत्रयोदश सुवर्णलक्षा इत्यर्थ, चक्रवर्त्तिना दीयते, तथा एतावत्य एव कोट्य' प्रीतिदान चक्रवर्तिन, तत्र वृत्तिर्या कालमानेन परिभाषिता नियुक्तपुरुषेभ्यो दीयते, प्रीतिदानं यद्भगवदागमने निवेदिते परमहर्षान्नियुक्तेतरेभ्यो दीयते, तथा वृत्ति सवत्सरनियता, प्रीतिदानमनियतमिति ॥

एयं चेव पमाणं नवर रययं तु केसवा दिंति। मंडलियाण सहस्सा वित्ती पीई सयसहस्सा ॥ ५८१ ॥

दायालमिति, क्रमव्याकरणे तु कस्यचिदनपेतसंशयस्य सर्वज्ञप्रतीत्यभाव' स्यात्, तथा अचिन्त्यगुणभूति'–अचिन्त्या गुणसम्पद्भगवत स्वाभाविकी, ततो यस्मादेते गुणा अतो युगपत् कथयति ॥ गतं पृच्छाद्वारमधुना श्रोतृपरिणाम पर्यालोच्यते, तत्र यथा सर्वमशयिना सा पारमेश्वरी वाग् अशेषसशयोन्मूलनेन स्वभाषया परिणमते तथा प्रतिपादयति—

वासोदगस्स व जहा वन्नाई हुंति भायणविसेसा । सव्वेसिंपि सभास जिणभासा परिणमे एवं ॥ ५७७ ॥

वर्षोदकस्य–वृष्ट्युदकस्य वाशब्दादन्यस्य वा यथैकरूपस्य सतो भाजनविशेषात् वर्णादयो भवन्ति, कृष्णसुरभिमृत्तिकाया स्वच्छं सुगन्धि रसवच्च भवति, ऊषरे तु विपरीतम्, एवं सर्वेषामपि श्रोतॄणा स्वभाषया जिनभाषा परिणमते ॥ तीर्थकरवाच सौभाग्यगुणप्रतिपादनार्थमाह—

साहारणासवत्ते तदुवओगो उ गाहगगिराए । न य निव्विज्जइ सोआ किढिवाणियदासिओहरणा ॥ ५७८ ॥

साधारणा भगवतो वाणी अनेकप्राणिषु स्वभाषात्वेन परिणमनात्, नरकादिभयरक्षणपरत्वात् असपत्ना–असदृशी अद्वितीया, साधारणा चासौ असपत्ना च साधारणासपत्ना तस्या साधारणासपत्नाया सत्या, तस्यामुपयोगस्तदुपयोग एव भवति श्रोतु, तुशब्दस्यावधारणार्थत्वात्, कस्या ?–ग्राहयतीति ग्राहका सा चासौ गीश्च ग्राहकगीस्तस्या ग्राहकगिरि, उपयोगे सत्यपि अन्यत्र निर्वेदो दृश्यते, तत आह—न च निर्विद्यते श्रोता, कथमर्थ' खल्ववगन्तव्य इत्याह–किढिवणिग्दास्युदाहरणात्। तच्चेदम्— एगस्स वाणियस्स एगा किढी दासी, किढी नाम थेरी, सा गोसे कट्ठाण गया, तण्हाछुहाकिलता मज्झण्हे आगया, अतिथोवाणि कट्ठाणि आणियाणित्ति पिट्टित्ता भुक्खियतिसिया पुणो पट्ठविया, सा य वड्ढ कट्ठभार

गहाय ओगाहतीए पोरसीए आगच्छति, कालो य जेट्ठमासो, अह ताए थेरीए कट्ठभारातो एग कठ पडिय, ततो ताए ओणमित्ता त गहियं, तसमय च जोयणनीहारिणा सरेण भयवं तित्थयरो धम्म कहेइ, सा थेरी तं सद्द सुणंती तहेव ओणया सोउमाढत्ता, उण्हं खुह पिवास परिस्सम च न विदइ, सूरत्थमणे तित्थयरो धम्म कहित्ता उट्ठितो, थेरी गया। एवम्—

सव्वाउअपि सोआ झविज्ज जइ हु सययं जिणो कहए। सीउण्हखुप्पिवासापरिस्समभएऽवि अविगणंतो ॥ ५७९ ॥

भगवति कथयति भगवत्समीपवर्त्त्येव सन् सर्वायुष्कमपि श्रोता क्षपयेत् यदि हु सततम्–अनवरतं जिन॰ कथयेत्, किंविशिष्ट॰ सन् इत्याह—शीतोष्णक्षुत्पिपासापरिश्रमभयान्यविगणयन् ॥ गतं श्रोतृपरिणामद्वारम्, सम्प्रति दानद्वार भाव्यते–तत्र भगवान् येषु ग्रामनगरादिषु विहरति तेभ्यो वार्त्तां ये खल्वानयन्ति तेभ्यो यत् प्रयच्छन्ति वृत्तिदानं प्रीतिदान च चक्रवर्त्त्यादयस्तदुपदर्शयन्नाह—

वित्ती उ सुवन्नस्सा बारस अद्धं च सयसहस्साइं। तावइयं चिय कोडी पीईदाणं तु चक्कीणं ॥ ५८० ॥

वृत्तिस्तु–वृत्तिरेव नियुक्तपुरुषेभ्य सुवर्णस्य द्वादश शतसहस्राणि अर्द्धं च, अर्द्धत्रयोदश सुवर्णलक्षा इत्यर्थः, चक्रवर्त्तिना दीयते, तथा एतावत्य एव कोट्य' प्रीतिदान चक्रवर्त्तिन , तत्र वृत्तिर्या कालमानेन परिभाषिता नियुक्तपुरुषेभ्यो दीयते, प्रीतिदानं यद्भगवदागमने निवेदिते परमहर्षान्नियुक्तेतरेभ्यो दीयते, तथा वृत्ति सवत्सरनियता, प्रीतिदानमनियतमिति ॥

एयं चेव पमाणं नवर रययं तु केसवा दिंति। मंडलियाण सहस्सा वित्ती पीई सयसहस्सा ॥ ५८१ ॥

एतदेव प्रमाण वृत्तिप्रीतिदानयो केशवानां, नवर रजतं–रूप्यं केशवा–वासुदेवा ददति, तथा माण्डलिकानां राज्ञा अर्द्धनयोदश सह्यानि सहस्राणि रूप्यस्य वृत्तिदान, प्रीतिदान शतसहस्राणि–लक्षाणि अर्द्धत्रयोदशसङ्ख्यानि ॥ किमेते एव महापुरुषा प्रयच्छन्तीति ?, नेत्याह—

भत्तिविहवाणुरूवं अन्नेवि य दिंति इब्भमाईआ । सोऊण जिणागमणं निउत्तमनिओइएसुं वा ॥ ५८२ ॥

इभ्यो–महाधनपति , आदिशब्दान्नगरग्रामभोगिकादिपरिग्रह', अन्येऽपि च इभ्यादयो ( यथा ) भक्तिविभवादिकं श्रुत्वा जिनागमन ददति, केभ्य इत्याह–नियुक्तेभ्योऽनियोजितेभ्यो वा ॥ अथ तेपामित्थं प्रयच्छता के गुणाः ?, उच्यते–

देवाणुवित्ती भत्ती पूआ थिरकरण सत्तअणुकंपा । साओदयदाणगुणा पभावणा चेव तित्थस्स ॥ ५८३ ॥

देवानुवृत्ति' कृता भवति, देवा अप्यनुवर्त्तिता भवन्ति, कथं ?, यतो देवा भगवत पूजा कुर्वन्ति, प्रवृत्तिकथकेभ्यश्च दानं ददति, अतस्तेऽप्यनुवर्त्तिता भवन्ति, तथा भक्तिर्भगवतः कृता भवति पूजा च, तथा अभिनवश्रावकाणा स्थिर-करण, तथा वार्त्तानिवेदकस्य सत्त्वस्यानुकम्पा कृता भवति, तथा सातोदयं–सातवेदनीयं कर्म्म एवमुपचीयते, एते वृत्तिप्री-तिदानगुणा भवन्ति, तथा प्रभावना तीर्थस्यैव कृता भवतीति ॥ गत दानद्वारम्, अधुना माल्यद्वारमधिकृत्य प्रोच्यते, तत्र भगवान् प्रथमा सम्पूर्णपौरुषीं धर्ममाचष्टे, अत्रान्तरे देवमाल्य प्रविशति, वलिरित्यर्थ , अथ कस्तं वलि करोतीत्यत आह–

राया व रायमच्चो तस्साऽसइ पउरजाणवउ वावि । दुब्बलिखंडियबलिछडिअ तंदुलाणाढयं कलमा ॥ ५८४ ॥

राजा च–चक्रवर्त्तिमाण्डलिकादिः राजामात्यो वा, अमात्यो–मन्त्री, तस्य राज्ञोऽमात्यस्य वा असति–अभावे नगरनि-

वासिविशिष्टलोकसमुदायः पौर तत् करोति ग्रामादिपु जनपदो वा, अत्र जनपदशब्देन तन्निवासी लोक परिगृह्यते । स बलि किंविशिष्टः किंपरिमाणो वा क्रियते ? इत्याह-'दुब्बले'त्यादि, दुर्वलिकया कण्डिताना बलीति बलिकया छटिताना तन्दुलाना कलमा इति प्राकृतशैल्या कलमाना आढकं-चतु प्रस्थप्रमाण करोति ॥ किंविशिष्टानामित्याह—

भाइयपुणाणिआण अखंडफुडिआण फलगसरियाणं । कीरइ बली सुराविय तत्थेव छुहंति गंधाइं ॥ ५८५ ॥

भाजिता-ईश्वरादिगृहेपु वीननार्थमर्पिता' प्रत्यानीतास्तेभ्यः पुनरानीता, भाजिताश्च ते पुनरानीताश्च २ तेपा, किंविशिष्टानामित्याह-अखण्डा -सम्पूर्णावयवा अस्फुटिता.-राजीरहिता, अखण्डाश्च ते अस्फुटिताश्चेति विशेपणसमासः, तेपा, 'फलकसरिताणं'ति फलिकवीनितानां, एवभूतानामाढक क्रियते, बलि. सिद्ध', सुरा अपि च तत्रैव-बलौ प्रक्षिपन्ति गन्धादीन् ॥ गत देवमाल्यद्वारम्, अधुना माल्यानयनद्वारमभिधीयते—तमित्थं निष्पन्नं बलि राजादयस्त्रिदशसहिता गृहीत्वा तूर्यनिनादेन दिग्मण्डलमापूरयन्त खल्वागच्छन्ति, पूर्वद्वारेण च प्रवेशयन्ति, अत्रान्तरे भगवानपि धर्मकथामुपसहरतीत्याह—

बलिपविसणसमकालं पुव्वदारेण ठाइ परिकहणा । तिगुणं पुरओ पाडण तस्सद्धं अवडियं देवा ॥ ५८६ ॥

पूर्वद्वारेणेति व्यवहित उपन्यास., पूर्वद्वारेण बलेरभ्यन्तरप्राकाराभ्यन्तरे प्रवेशन बलिप्रवेशन तत्समकालं तिष्ठते-उपरमते धर्मकथना धर्मकथा, किमुक्तं भवति ?-अभ्यन्तरप्राकाराभ्यन्तरे यदा बलिः प्रविशति तदा भगवान् धर्मकथा-

मुपसहृत्य तूष्णीकोऽवतिष्ठते, तत. स राजादिर्बलिव्यग्रहस्तो देवपरिवृतो भगवन्तं तीर्थकर त्रिकृत्व प्रदक्षिणीकृत्य त बलिं तत्पादान्तिके पुरत पातयति, तस्यार्द्धमपतित देवा गृह्णन्ति ॥

अद्धद्ध अहिवइणो अवसेस होइ पागयजणस्स। सव्वामयप्पसमणी कुप्पइ नऽन्नो य छम्मासे ॥ ५८७ ॥

शेषस्यार्द्धस्यार्द्धमर्द्धार्धं तदधिपतेर्भवति, राज्ञ इत्यर्थ', अ.शेष यद्बलेरास्ते तद्भवति कस्य ?–प्रकृतिषु भव प्राकृतः स चासौ जनस्तस्य। स चैवरूपसामर्थ्य –यद्येकमपि सिक्थ तत्सम्बन्धि यस्य शिरसि प्रक्षिप्यते तस्य पूर्वोत्पन्नो व्याधि खलूपशम याति, अपूर्वश्च षण्मासान् यावन्न भवति, तथा चाह–सर्वामयप्रशमन', सूत्रे स्त्रीलिङ्गनिर्देश प्राकृतत्वात्, कुप्यति नान्यश्च षण्मासान् यावत् ॥ इत्थं बलौ प्रक्षिप्ते भगवान् प्रथमप्राकारादुत्तरद्वारेण निर्गत्य द्वितीये प्राकारान्तरे पूर्वस्या दिशि देवच्छन्दके यथासुखं समाधिना व्यवतिष्ठते ॥ सम्प्रति 'उवरि तित्थ'मिति द्वारमभिधीयते–भगवत्युत्थिते द्वितीयस्या पौरुष्यामाद्यगणधरोऽन्यो वा गणधरो धर्म्ममाचष्टे, स्यान्मतिः–किं कारण द्वितीयस्यामपि पौरुष्या तीर्थकर एव धर्मं न कथयति ?, तत आह—

खेयविणोओ सीसगुणदीवणा पच्चओ उभयतोऽवि। सीसायरियकमोऽवि अ गणहरकहणे गुणा हुंति ॥ ५८८ ॥

खेदविनोद –परिश्रमविनाशो भगवतो भवति, तथा शिष्यगुणदीपना–शिष्यगुणप्रख्यापना च कृता भवति, तथा प्रत्यय उभयतोऽपि श्रोतॄणामुपजायते, यथा भगवताऽभ्यधायि तथा गणधरेणापि, यदिवा गणधरे तदनन्तर तदुक्तानुवादिनि प्रत्यय· श्रोतॄणा भवति, यथा नान्यथावाद्ययमिति, तथा शिष्याचार्यक्रमोऽपि दर्शितो भवति, आचार्या-

दुपश्रुत्य योग्यशिष्येण तदर्थान्वाख्यान कर्त्तव्यमिति, एते गणधरकथने गुणा भवन्ति ॥ आह–स गणधर' क्व निषण्ण' कथयति ? उच्यते—

राओवणीयसीहासणोवविट्ठो य पायपीढे वा । जिट्ठो अन्नयरो वा गणहारि कहेइ बीयाए ॥ ५८९ ॥

राज्ञा उपनीत राजोपनीतं तच्च तत् सिंहासनं २ तत्र वा उपविष्ट॰, तदभावे तीर्थंकरपादपीठे वा उपविष्टो ज्येष्ठोऽन्यतरो वा गण–साध्वादिसमुदायलक्षण धारयितुं शीलमस्येति गणधारी कथयति, द्वितीयाया पौरुष्याम् ॥ आह–स कथयन् कथ कथयति ?, उच्यते—

सखाईएवि भवे साहइ जं वा परो उ पुच्छिज्जा । न उ(य)णं अणाइसेसी वियाणई एस छउमत्थो ॥ ५९० ॥

सङ्ख्यातीतान्, असङ्ख्येयानपीत्यर्थः, भवान् 'साहेइ' इति देशीवचनमेतत् कथयति, किमुक्त भवति ?–असङ्ख्येयेषु भवेषु यदभवत् भविष्यति, यद्वा वस्तुजात परः पृच्छेत् तत्सर्व कथयति, अनेनाशेषाभिलाप्यपदार्थप्रतिपादनशक्तिरावेदिता, कि बहुना ?, 'न च' नैव णमिति वाक्यालङ्कारे अनतिशेषी–अनतिशायी, अवध्याद्यतिशयरहित इत्यर्थः, विजानाति यथा एषः–गणधरश्छद्मस्थ इति, अशेषप्रश्नोत्तरप्रदानसमर्थत्वात् तस्य, एवं तावत् समवसरणवक्तव्यता सामान्येनोक्ता, सम्प्रति प्रकृतमभिधीयते, तत्र भगवत' समवसरणे निष्पन्ने सति अत्रान्तरे देवकृतजयजयशब्दसम्मिश्रदिव्यदुन्दुभिशब्दाकर्णनोत्फुल्लनयनगगनावलोकनोपलब्धस्वर्गवधूसमेतसुरवृन्दाना यज्ञपाटकसमभ्यागतजनाना परितोषोऽभवत् अहो स्विष्टं यद्भिग्रहवन्त॰ खल्वागता देवा इति, तथा चाह—

त दिव्व देवघोसं सोऊण माहणा तहिँ तुट्ठा । अहो ! जन्निएण जट्ठं देवा किर आगया इहयं ॥ ५९१ ॥

त दिव्य देवघोष श्रुत्वा मनुष्यास्तत्र यज्ञपाटके तुष्टा , अहो विस्मये, यज्ञेन याजयति लोकानिति याज्ञिक' तेन इष्ट यतो देवा किल आगता अत्रेति, किलशब्द सशय एव, तेषामन्यत्र गमनात्, तत्र यज्ञपाटके वेदार्थविद एकादशापि गणधरा ऋत्विज समन्वागताः ॥ तथा चाह—

इक्कारसवि गणहरा सव्वे उन्नयविसालकुलवंसा । पावाइ मज्झिमाए समोसढा जन्नवाडम्मि ॥ ५९२ ॥

एकादशापि गणधरा समवसृता यज्ञपाटे इति योग , किम्भूता इत्याह—सर्वे–निरवशेषा' उन्नता' प्रधानजातित्वात् विशाला पितामहपितृपितृव्याद्यनेकजनसमाकुला' कुलान्येव वंशा–अन्वया येषा ते तथाविधा , पापाया मध्यमाया समवसृता–एकीभूता यज्ञपाटे ॥ आह—किमाद्याः किनामानो वा ते गणधरा इति ?, उच्यते—

पढमित्थ इदभूई बीए पुण होइ अग्गिभूइत्ति । तइए अ वाउभूई तओ विअत्ते सुहम्मे अ ॥ ५९३ ॥

मंडिअ मोरिअपुत्ते अकम्पिए चेव अयलभाया य । मेअज्जे अ पभासे गणधरा हुति वीरस्स ॥ ५९४ ॥

प्रथमोऽत्र गणधरमध्ये इन्द्रभूति द्वितीय' पुनर्भवति अग्निभूतिस्तृतीयो वायुभूतिश्चतुर्थो व्यक्तः, पञ्चम' सुधर्म्मस्वामी, पष्ठो मण्डिकपुत्रः सप्तमो मौर्यपुत्र', पुत्रशब्द प्रत्येकमभिसम्बध्यते, अष्टमोऽकम्पिक नवमोऽचलभ्राता दशमो मेतार्य एकादश प्रभास , एते गणधरा भवन्ति वीरस्य ॥

जंकारण निक्खमणं वुच्छं एएसि आणुपुव्वीए । तित्थं च सुहम्माओ निरवच्चा गणहरा सेसा ॥ ५९५ ॥

यत्कारण–यन्निमित्त निष्क्रमण यत्तदोर्नित्याभिसम्बन्धात् तत् एतेषा गणधराणामानुपूर्व्या–परिपाट्या वक्ष्ये, तथा तीर्थ सुधर्मात्–पञ्चमात् गणधरात् जात, यतो निरपत्या –शिष्यरहिता शेषा –इन्द्रभूत्यादयो गणधरा ॥ तत्र जीवादिसशयापनोदनिमित्तं गणधरनिष्क्रमणमितिकृत्वा यो यस्य सशयस्तदुपदर्शनार्थमाह—

जीवे कम्मे तज्जीव भूअ तारिसय बन्ध मुक्खे य । देवा नेरइया वा पुन्ने परलोअ निव्वाणे ॥ ५९६ ॥

आद्यस्य गणभृतो जीवे सशय', किमस्ति नास्तीति, द्वितीयस्य कर्म्मणि, यथा ज्ञानावरणीयादिलक्षणं कर्म्म किमस्ति कि वा नास्तीति, तृतीयस्य 'तज्जीवे'ति कि तदेव शरीर स एव जीव' कि वाऽन्य इति, न पुनर्जीवसत्ताया तस्य सशय', चतुर्थस्य भूतेषु सशय', कि पृथिव्यादीनि भूतानि सन्ति किं वा नेति ?, पञ्चमस्य 'तारिसय'त्ति कि यो यादृश इह भवे सोऽन्यस्मिन्नपि भवे तादृश एव उतान्यथापीति सशय , षष्ठस्य बन्धश्च मोक्षश्च बन्धमोक्षं तस्मिन् सशयो–यथा बन्धमोक्षौ स्त' कि वा नेति, आह—कर्म्मसशयादस्य को विशेष ?, उच्यते, स कर्मसत्तागोचर., अयं तु तदस्तित्वे सत्यपि जीवकर्म्मसयोगविभागगोचर इति, सप्तमस्य कि देवा• सन्ति कि वा न सन्तीतिसशय', अष्टमस्य नारकाः संशयगोचरः, कि ते सन्ति कि वा न सन्तीति, नवमस्य पुण्ये सशय , कर्मणि सत्यपि कि पुण्यमेव प्रकर्षप्राप्तं प्रकृष्टसुखहेतु• तदेव चापचीयमानमत्यन्तस्वल्पावस्थं दुःखस्य, उत तदतिरिक्त पापमस्ति, आहोस्विदेकमेवोभयरूपमुत स्वतन्त्रमुभयमिति, दशमस्य परलोके संशयः, सत्याप्यात्मनि परलोको–भवान्तरलक्षण' किमस्ति कि वा नास्तीति, एकादशस्य निर्वाणे सशयः, निर्वाणं किमस्ति कि वा नेति, आह–बन्धमोक्षसंशयादस्य को विशेषः ?,उच्यते—स ह्युभयगो-

चरः, अय तु केवलविभागविषय एव, तथा कि ससाराभावमात्र एव मोक्षः किं वाऽन्य इत्यादि ॥ साम्प्रतं गणधरपरिवारमानप्रदर्शनार्थमाह—

पंचण्ह पंच सया अद्धुट्ठसया य हुंति दुण्ह गणा। दुण्हं तु जुअलयाण तिसओ तिसओ हवइ गच्छो ॥५९७॥

पञ्चानामाद्याना गणधराणा प्रत्येक परिवारः पञ्च शतानि, तथा अर्द्धं चतुर्थस्य येषु तानि अर्द्धचतुर्थानि अर्द्धचतुर्थानि शतानि मान ययोस्तौ अर्द्धचतुर्थशतौ भवतो द्वयो प्रत्येक गणौ, इह गणः समुदाय एवोच्यते, न पुनरागमिक, तथा द्वयोर्गणधरयुगलकयो प्रत्येक त्रिशतस्त्रिशतो गच्छः, किमुक्त भवति ?–उपरिस्थिताना चतुर्णां गणभृता प्रत्येक प्रत्येक त्रिशतमानः परिवार ॥ उक्तमानुषङ्गिक, प्रकृतमुच्यते—ते हि देवास्त यज्ञपाट परिहृत्य समवसरणभुवि निपतितवन्त, ताश्च तथा दृष्ट्वा लोकोऽपि तत्रैव जगाम, भगवन्तं त्रिदशलोकेन पूज्यमान दृष्ट्वा अतीव हर्षं चक्रे, प्रवादश्च सञ्जात –सर्वज्ञोऽत्र समवसृतस्त देवा पूजयन्तीति, अत्रान्तरे खल्वाकर्णितसर्वज्ञप्रवादोऽमर्षाध्मात इन्द्रभूतिर्भगवन्त प्रति प्रस्थित, तथा चाह—

सोऊण कीरमाणि महिमं देवेहि जिणवरिंदस्स। अह एइ अहंमाणी अमरिसिओ इंदभूइत्ति ॥ ५९८ ॥

श्रुत्वा–जनपरम्परात आकर्ण्य, पाठान्तरतो दृष्ट्वा वा, महिमा—पूजा देवै क्रियमाणा जिनवरेन्द्रस्य भगवतो वर्द्धमानस्वामिन, अथास्मिन् प्रस्ताव एति—आगच्छति भगवत्समीपम्, अहमेव विद्वानिति मानोऽस्येति अहंमानी अमर्षितोऽमर्षो–मत्सरविशेष स सञ्जातोऽस्य सोऽमर्षित., मयि सति कोऽन्य सर्वज्ञ इत्यपनयाम्यद्य सर्वज्ञवादमित्यादि-

सङ्कल्पकलुषितान्तरात्मा, कोऽसावित्याह—इन्द्रभूतिरिति नाम्ना प्रथितः, स भगवत्समीप प्राप्य भगवन्त च चतुस्त्रिंशदतिशयसमन्वित देवासुरनरेश्वरपरिवृत दृष्ट्वा साशङ्कस्तदग्रतस्तस्थौ ॥ एतदेव सविस्तर भाष्यकार आह—

किं सकलशास्त्रपारगं मुक्त्वा किमेष लोकस्तस्य पादमूल व्रजति ?, न चासौ मदपेक्षया किमपि जानाति, तथाहि—

मुत्तूण ममं लोगो, कि वच्चइ एस तस्स पामूले ?। अन्नोऽवि जाणइ मए ठिअम्मि कत्तुचिय एय ? ॥१२०॥

मयि प्रतिवादिनि स्थितेऽन्योऽपि किमपि जानातीति कौतस्त्यमेतत् ?, न चैतत्सम्भवतीति भावः ॥ पुनरप्याह—

वच्चिज्ज व मुक्खजणो देवा कहऽणेण विम्हयं नीया ?। वंदंति संथुणंति अ जेणं सवन्नुवुद्धीए ॥ १२१ ॥

व्रजेद्वा तत्पादमूलं मूर्खजनो, मूर्खतया युक्तायुक्तविवेकविकलत्वात्, देवास्तु कथमनेन विस्मयं नीताः ?, येन विस्मयनयनेन सर्वज्ञबुद्ध्या तं वन्दन्ते सस्तुवन्ति च ।

अहवा जारिसओ च्चिय सो नाणी तारिसा सुरा तेऽवि। अणुसरिसो सजोगो गामनडाणं व मुक्खाणं ॥१२२॥

अथवा यादृश एव स ज्ञानी तेऽपि सुरास्तादृशा एव, मूर्खा इत्यर्थः, ततोऽनुसदृशं–अनुरूप· सयोगस्तस्य ज्ञानिनः एतेषा च देवाना, कयोरिवेत्याह–ग्रामनटयोरिव मूर्खयोः, यथा ग्रामो मूर्खो नटोऽपि च तथाविधविद्याविकलत्वात् मूर्ख इति परस्पर तयोः सयोगोऽनुरूपः, एवमेषोऽपीति ॥

काउं हयप्पयावं पुरतो देवाण दाणवाणं च। नासेहं नीसेसं खणेण सवन्नुवायं से ॥ १२३ ॥

देवाना दानवाना च पुरत.–अग्रे तथाविधप्रश्नजालैर्हतप्रतापं कृत्वा क्षणेन–क्षणमात्रेण 'से' तस्य सर्वज्ञवादं नि शेपमह नाशयामि ।

**इअ वुत्तूणं पत्तो दट्ठुं तेल्लुक्कपरिवुडं वीरं । चउतीसाइसयनिहिं स सकिओ चिट्ठिओ पुरओ ॥ १२४ ॥**

इति–पूर्वोक्तमुक्त्वा प्राप्तो भगवत्समीपं, दृष्ट्वा च भगवन्तं वीर त्रैलोक्यपरिवृत चतुस्त्रिंशदतिशयनिधिं स शङ्कित· पुरतोऽवस्थित ॥ अत्रान्तरे—

**आभट्ठो य जिणेणं जाइ–जरा–मरणविप्पमुक्केणं । नामेण य गुत्तेण य सवन्नू सवदरिसिणा ॥ ५९९ ॥**

आभापित –सलक्षो जिनेन–भगवता महावीरेण जाति –प्रसूतिर्जरा–वयोहानिलक्षणा मरणं–दशविधप्राणविप्रयोगरूपं एभिर्विप्रमुक्तस्तेन, कथमाभापित इत्याह–नाम्ना–हे इन्द्रभूते ! इत्येवरूपेण तथा गोत्रेण च–यथा हे गौतमगोत्र !, किंविशिष्टेन जिनेनेत्याह–सर्वज्ञेन सर्वदार्शिना ॥ आह–यो जरामरणविप्रमुक्त स सर्वज्ञ एवेति गतार्थमिद विशेषणं, न, नयवादपरिकल्पितजात्यादिविप्रमुक्तमुक्तनिरासार्थत्वात्, तथाहि–कैश्चिद् गुणविप्रमुक्तमोक्षवादिभिरचेतना मुक्ता इष्यन्तेऽतस्तन्निरासार्थमूचे सर्वज्ञेन सर्वदर्शिनेति ॥ इत्थं नामगोत्राभ्या सलक्षस्य तस्य चिन्ता अभवत्–तथा चाह—

**हे ! इंदभूइ ! गोअम ! सागयमुत्ते जिणेण चिंतेइ । नामंपि मे विआणइ, अहवा को मं न याणेइ ? ॥ १२५ ॥**

हे इन्द्रभूते ! गौतम ! स्वागतमिति जिनेनोक्ते स चिन्तयति–अहो नामापि मे विजानाति, अथवा सर्वत्र प्रसिद्धोऽहं को मा न जानाति ? ॥

जइ वा हिअयगयं मे ससय मन्निज्ज अहव छिंदिज्जा । ता हुज्ज विम्हओ मे इय चिंततो पुणो भणिओ॥१२९॥

यदि मे हृद्गत सशय मन्येत–जानीयात्, अथवा छिन्द्यात्–अपनयेत्, ततो मे विस्मयो भवेत्–भविष्यति इति चिन्तयन् पुनरपि भगवता भणित ॥ कि भणित इत्याह—

कि मन्नि अत्थि जीवो उयाहु नत्थित्ति संसयो तुज्झ । वेय पयाण य अत्थं न याणसी तेसिमो अत्थो॥६००॥

हे गौतम ! कि मन्यसे–अस्ति जीव उत नास्तीति, नन्वयमनुचित एव तव सशय', यतोऽयं संशयस्ते विरुद्धवेदपदश्रुतिनिवन्धनः, तेषा च वेदपदानामर्थ न जानासि, यथा न जानासि तथा वक्ष्याम , तेपामयमर्थो–वक्ष्यमाणस्वरूपः, अन्ये तु किशब्द परिप्रश्नार्थे व्याचक्षते, तच्च न युज्यते, भगवतः सकलसशयातीतत्वात्, संशयवत परिप्रश्नार्थ किंशब्दप्रयोगो, यथा किमित्थमन्यथा वेति, अथवा किमस्ति जीव उत नास्ति इति मन्यसे, अयं तव सशय इत्येवं व्याख्येयं, शेप तथैव, यदुक्त संशयस्तव विरुद्धपदश्रुतिनिवन्धन इति, तान्यमूनि वेदपदानि—'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय पुनस्तान्येवानु विनश्यति न प्रेत्य सञ्ज्ञास्ती'त्यादि, तथा 'स वै अयमात्मा ज्ञानमय' इत्यादीनि च, एतेषा च वेदपदानामयमर्थो भवच्चेतसि विपरिवर्त्तते–विज्ञानमेव–चैतन्यमेव घनो–नीलादिरूपत्वात् विज्ञानघन स एव एतेभ्यः—अध्यक्षत परिच्छिद्यमानस्वरूपेभ्य पृथिव्यादिलक्षणेभ्यो भूतेभ्यः समुत्थाय—उत्पद्य पुनस्तान्येवानु विनश्यति–तान्येव भूतानि अनुसृत्य विनश्यति, तत्रैवाव्यक्तरूपतया सलीन भवतीति भावः, न प्रेत्य सञ्ज्ञास्ति—मृत्वा पुनर्जन्म प्रेत्येत्युच्यते न तत्सञ्ज्ञास्ति, न परलोकसञ्ज्ञास्तीति भाव', ततः कुतो जीवः ?, युक्त्युपपन्नश्चायमर्थ इति ते मतिः, यतो

देवाना दानवाना च पुरत'–अग्रे तथाविधप्रश्नजालैर्हतप्रतापं कृत्वा क्षणेन–क्षणमात्रेण 'से' तस्य सर्वज्ञवादं नि शेषमह नाशयामि ।

इअ वुत्तूणं पत्तो दट्ठुं तेलुक्कपरिवुड वीर । चउतीसाइसयनिहिं स संकिओ चिट्ठिओ पुरओ ॥ १२४ ॥

इति–पूर्वोक्तमुक्त्वा प्राप्तो भगवत्समीप, दृष्ट्वा च भगवन्तं वीर त्रैलोक्यपरिवृत चतुस्त्रिंशदतिशयनिधिं स शङ्कितः पुरतोऽवस्थित ॥ अत्रान्तरे—

आभट्ठो य जिणेण जाइ–जरा–मरणविप्पमुक्केणं । नामेण य गुत्तेण य सवन्नू सव्वदरिसिणा ॥ ५९९ ॥

आभाषितः–सलप्तो जिनेन–भगवता महावीरेण जाति –प्रसूतिर्जरा–वयोहानिलक्षणा मरण–दशविधप्राणविप्रयोग-रूपं एभिर्विप्रमुक्तस्तेन, कथमाभाषित इत्याह–नाम्ना–हे इन्द्रभूते ! इत्येवरूपेण तथा गोत्रेण च–यथा हे गौतमगोत्र !, किंविशिष्टेन जिनेनेत्याह–सर्वज्ञेन सर्वदर्शिना ॥ आह–यो जरामरणविप्रमुक्त· स सर्वज्ञ एवेति गतार्थमिद विशेषण, न, नयवादपरिकल्पितजात्यादिविप्रमुक्तमुक्तनिरासार्थत्वात्, तथाहि–कैश्चिद् गुणविप्रमुक्तमोक्षवादिभिरचेतना मुक्ता इष्यन्तेऽतस्तन्निरासार्थमूचे सर्वज्ञेन सर्वदर्शिनेति ॥ इत्थं नामगोत्राभ्या सलप्तस्य तस्य चिन्ता अभवत्–तथा चाह—

हे ! इंदभूइ ! गोअम ! सागयमुत्ते जिणेण चिंतेइ । नामंपि मे विआणइ, अहवा को मं न याणेइ ? ॥ १२५ ॥

हे इन्द्रभूते ! गौतम ! स्वागतमिति जिनेनोक्ते स चिन्तयति–अहो नामापि मे विजानाति, अथवा सर्वत्र प्रसिद्धोऽहं को मा न जानाति ? ॥

साम्प्रतविज्ञानोपयोगविघ्नितत्वात्, अथवा एव व्याख्या—विज्ञानघन एवैतेभ्यो भूतेभ्य समुत्थाय पुनस्तान्येवानु विनश्यती-
त्येतन्न, यत प्रेत्यसञ्ज्ञाऽस्ति—परलोकसञ्ज्ञास्ति ॥ यदप्युक्तं—नासौ प्रत्यक्षेण परिगृह्यते इति तदप्यसमीचीनम्, आत्मनः प्रत्यक्ष-
सिद्धत्वात्, तद्गुणस्य ज्ञानस्य स्वसंवेदनप्रमाणसिद्धत्वात्, तथाहि—स्वसंविदिता एवावग्रहेहापायादयः उत्पद्यन्ते व्ययन्ते
वा, ततस्तद्गुणस्य स्वसंविदितत्वात्सिद्धमात्मन. प्रत्यक्षत्व, अथ ब्रवीथा भूतगुणश्चैतन्य, तथा च वेदेऽप्युक्तम्, 'एतेभ्यो
भूतेभ्यः समुत्थाये'त्यादि, ततः कथ ज्ञानस्य स्वसंविदितत्वे आत्मन. प्रत्यक्षत्व ?, ज्ञानस्यात्मगुणत्वाभावात्, तदयुक्त, भूतगु-
णत्वे सति पृथिव्या काठिन्यस्येव सर्वत्र सर्वदा चोपलम्भप्रसङ्गात्, न च सर्वत्र सर्वदा चोपलभ्यते चैतन्य, लोष्ठादौ मृताव-
स्थाया चानुपलम्भात्, अथ तत्रापि चैतन्यमस्ति केवलं शक्तिरूपेण ततो नोपलभ्यते, तदसम्यक्, विकल्पद्वयानतिक्रमात्,
सा हि शक्तिश्चैतन्याद्विलक्षणा उत चैतन्यमेव ?, यदि विलक्षणा ततः कथमुच्यते शक्तिरूपेण चैतन्यमस्ति, नहि पटे विद्य-
माने पटरूपेण घटस्तिष्ठतीति वक्तुं शक्यं, तथा चाहान्योऽपि—"रूपान्तरेण यदि तत्तदेवास्तीति मा रटी । चैतन्याद-
न्यरूपस्य, भावे तद्विद्यते कथम् ? ॥ १ ॥ अथ द्वितीयः पक्षस्तर्हि चैतन्यमेव सा, कथमनुपलम्भः ?, आवृतत्वादनुप-
लम्भ इति चेत्, नन्वावृतिरावरणं, तच्चावरण किं भूताना विवक्षितपरिणामाभाव उत परिणामान्तर आहोस्विदन्यदेव
भूतातिरिक्तं किञ्चित् ?, तत्र न तावद्विवक्षितपरिणामाभावः, एकान्ततुच्छरूपतया तस्यावारकत्वायोगात्, अन्यथा
तस्याप्यतुच्छरूपतया भावरूपतापत्तिः, भावत्वे च पृथिव्यादीनामन्यतमो भावो भवेत् 'पृथिव्यादीन्येव भूतानि तत्त्व'मिति
वचनात्, पृथिव्यादीनि च भूतानि चैतन्यस्य व्यञ्जकानि नावारकाणीति कथमावारकत्वं तस्योपपत्तिमत् ?, अथ परि-

नासौ प्रत्यक्षेण परिगृह्यते, अतीन्द्रियत्वात्, नाप्यनुमानेन, यतस्तल्लिङ्गलिङ्गिसम्बन्धपूर्वकं, न चात्र लिङ्गस्य लिङ्गिना सह सम्बन्ध॰ प्रत्यक्षगम्यो, लिङ्गिनोऽतीन्द्रियत्वात्, नाप्यनुमानगम्योऽनवस्थाप्रसक्तेः, तदपि हि लिङ्ग लिङ्गिसम्बन्धग्रहण-पूर्वक, तत्रापि चेयमेव वार्त्ता इत्यनवस्थानुषङ्ग । नाप्यागमगम्य॰, परस्परविरुद्धार्थतया तेषामागमाना प्रमाणत्वाभावात्, तथाहि—केचिदेवमाहुः-एतावानेव लोकोऽय, यावानिन्द्रियगोचर॰ । भद्रे ! वृकपदं पश्य, यद्वदन्त्यबहुश्रुता॰ ॥ १ ॥ इत्यादि, अपरे प्राहु —"न रूप भिक्षव पुद्गला"इत्यादि, पुद्गले रूप निषेधयन्ति, अमूर्त्त आत्मेत्यर्थः, अन्ये पुनरेव—'अकर्त्ता निर्गुणो भोक्ता'इत्यादि, अपरे एव—"स वै अयमात्मा ज्ञानमय'इत्यादि, नचैते सर्व एव प्रमाण, परस्पर-विरोधेन, एकार्थाभिधायिपरस्परविरुद्धवाक्यपुरुषव्रातवत्, अतो न विद्मः—किमस्ति नास्तीत्यय तवाभिप्रायः, तत्र वेदपदाना चार्थं न जानासि, चशब्दात् युक्ति हृदय च, तथाहि—वेदपदानामयमर्थ॰—विज्ञानघन एवेति ज्ञानोपयो-गदर्शनोपयोगरूप विज्ञान ततोऽनन्यत्वात् आत्मा विज्ञानघनः, प्रतिप्रदेशमनन्तविज्ञानपर्यायसङ्घातात्मकत्वाद्वा विज्ञा-नघन , एवशब्दोऽवधारणे विज्ञानघनादनन्यत्वात् विज्ञानघन एव, एतेभ्यो भूतेभ्य॰—क्षित्युदकादिभ्यः समुत्थाय—कथञ्चिदुत्पद्येति, घटविज्ञानपरिणतो हि आत्मा घटाद् भवति, तद्विज्ञानक्षयोपशमस्य तत्सापेक्षत्वाद्, अन्यथा निरालम्ब-नतया तस्य मिथ्यात्वप्रसक्तेः, एवं सर्वत्र भावनीय, तत उक्त—तेभ्य समुत्थाय कथञ्चिदुत्पद्येति, पुनस्तान्येव-भूतानि 'अनु विनश्यति' तेषु विवक्षितेषु भूतेषु व्यवहितेषु अपगतेषु वा आत्मापि तेन विज्ञानघनात्मना उपरमतेऽन्यविज्ञानात्मना उत्पद्यते, यदिवा सामान्यचैतन्यरूपतयाऽवतिष्ठते इति, न प्रेत्य संज्ञाऽस्ति—न प्राक्तनी घटादिविज्ञानसंज्ञाऽवतिष्ठते,

साम्प्रतविज्ञानोपयोगविघ्नितत्वात्, अथवा एव व्याख्या—विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय पुनस्तान्येवानु विनश्यती-
त्येतन्न, यत' प्रेत्यसञ्ज्ञाऽस्ति—परलोकसञ्ज्ञास्ति ॥ यदप्युक्तं—नासौ प्रत्यक्षेण परिगृह्यते इति तदप्यसमीचीनम्, आत्मनः प्रत्यक्ष-
सिद्धत्वात्, तद्गुणस्य ज्ञानस्य स्वसवेदनप्रमाणसिद्धत्वात्, तथाहि—स्वसंविदिता एवावग्रहेहापायादयः उत्पद्यन्ते व्ययन्ते
वा, ततस्तद्गुणस्य स्वसविदितत्वात्सिद्धमात्मन प्रत्यक्षत्व, अथ ब्रवीथा भूतगुणश्चैतन्य, तथा च वेदेऽप्युक्तम्, 'एतेभ्यो
भूतेभ्यः समुत्थाये'त्यादि, ततः कथ ज्ञानस्य स्वसविदितत्वे आत्मन प्रत्यक्षत्व ?, ज्ञानस्यात्मगुणत्वाभावात्,तदयुक्तं, भूतगु-
णत्वे सति पृथिव्याः काठिन्यस्येव सर्वत्र सर्वदा चोपलम्भप्रसङ्गात्, न च सर्वत्र सर्वदा चोपलभ्यते चैतन्यं, लोष्ठादौ मृताव-
स्थाया चानुपलम्भात्, अथ तत्रापि चैतन्यमस्ति केवल शक्तिरूपेण ततो नोपलभ्यते, तदसम्यक्, विकल्पद्वयानतिक्रमात्,
सा हि शक्तिश्चैतन्याद्विलक्षणा उत चैतन्यमेव ?, यदि विलक्षणा तत' कथमुच्यते शक्तिरूपेण चैतन्यमस्ति, नहि पटे विद्य-
माने पटरूपेण घटस्तिष्ठतीति वक्तुं शक्यं, तथा चाहान्योऽपि—"रूपान्तरेण यदि तत्तदेवास्तीति मा रटी । चैतन्याद-
न्यरूपस्य, भावे तद्विद्यते कथम् ? ॥ १ ॥ अथ द्वितीयः पक्षस्तर्हि चैतन्यमेव सा, कथमनुपलम्भः ?, आवृतत्वादनुप-
लम्भ इति चेत्, नन्वावृतिरावरणं, तच्चावरण कि भूताना विवक्षितपरिणामाभाव उत परिणामान्तर आहोस्विदन्यदेव
भूतातिरिक्त किञ्चित् ?, तत्र न तावद्विवक्षितपरिणामाभावः, एकान्ततुच्छरूपतया तस्यावारकत्वायोगात्, अन्यथा
तस्याप्यतुच्छरूपतया भावरूपतापत्तिः, भावत्वे च पृथिव्यादीनामन्यतमो भावो भवेत् 'पृथिव्यादीन्येव भूतानि तत्त्व'मिति
वचनात्, पृथिव्यादीनि च भूतानि चैतन्यस्य व्यञ्जकानि नावारकाणीति कथमावारकत्वं तस्योपपत्तिमत् ?, अथ परि-

नासौ प्रत्यक्षेण परिगृह्यते, अतीन्द्रियत्वात्, नाप्यनुमानेन, यतस्तल्लिङ्गलिङ्गिसम्बन्धपूर्वकं, न चात्र लिङ्गस्य लिङ्गिना सह सम्बन्ध॰ प्रत्यक्षगम्यो, लिङ्गिनोऽतीन्द्रियत्वात्, नाप्यनुमानगम्योऽनवस्थाप्रसक्ते॰, तदपि हि लिङ्गलिङ्गिसम्बन्धग्रहण-पूर्वक, तत्रापि चेयमेव वार्त्ता इत्यनवस्थानुषङ्ग । नाप्यागमगम्य॰, परस्परविरुद्धार्थतया तेषामागमाना प्रमाणत्वाभावात्, तथाहि—केचिदेवमाहु॰—एतावानेव लोकोऽय, यावानिन्द्रियगोचरः । भद्रे ! वृकपद पश्य, यद्वदन्त्यबहुश्रुता ॥ १ ॥ इत्यादि, अपरे प्राहु —"न रूप भिक्षवः पुद्गला"इत्यादि, पुद्गले रूप निषेधयन्ति, अमूर्त्त आत्मेत्यर्थ॰, अन्ये पुनरेवं—'अकर्त्ता निर्गुणो भोक्ता'इत्यादि, अपरे एव—"स वै अयमात्मा ज्ञानमय'इत्यादि, नचैते सर्वे एव प्रमाणं, परस्पर-विरोधेन, एकार्थाभिधायिपरस्परविरुद्धवाक्यपुरुषव्रातवत्, अतो न विद्मः—किमस्ति नास्तीत्यय तवाभिप्रायः, तत्र वेदपदाना चार्थं न जानासि, चशब्दात् युक्ति हृदयं च, तथाहि—वेदपदानामयमर्थ —विज्ञानघन एवेति ज्ञानोपयो-गदर्शनोपयोगरूप विज्ञान ततोऽनन्यत्वात् आत्मा विज्ञानघनः, प्रतिप्रदेशमनन्तविज्ञानपर्यायसङ्घातात्मकत्वाद्वा विज्ञा-नघन, एवशब्दोऽवधारणे विज्ञानघनादनन्यत्वात् विज्ञानघन एव, एतेभ्यो भूतेभ्य —क्षित्युदकादिभ्यः समुत्थाय—कथञ्चिदुत्पद्येति, घटविज्ञानपरिणतो हि आत्मा घटाद् भवति, तद्विज्ञानक्षयोपशमस्य तत्सापेक्षत्वाद्, अन्यथा निरालम्ब-नतया तस्य मिथ्यात्वप्रसक्तेः, एव सर्वत्र भावनीय, तत उक्त—तेभ्य समुत्थाय कथञ्चिदुत्पद्येति, पुनस्तान्येव—भूतानि 'अनु विनश्यति' तेषु विवक्षितेषु भूतेषु व्यवहितेषु अपगतेषु वा आत्मापि तेन विज्ञानघनात्मना उपरमतेऽन्यविज्ञानात्मना उत्पद्यते, यदिवा सामान्यचैतन्यरूपतयाऽवतिष्ठते इति, न प्रेत्य संज्ञाऽस्ति—न प्राक्तनी घटादिविज्ञानसंज्ञाऽवतिष्ठते,

प्राणिमय भवति, परिणतिविशेषसद्भावाभावादिति चेत्, ननु सोऽपि परिणतिविशेषसद्भाव' सर्वत्रापि कस्मान्न भवति ? सोऽपि हि भूतमात्रनिमित्तक एव, तत कथं तस्यापि क्वचित्कदाचिद्भाव' ?, अन्यच्च–स किरूप परिणतिविशेष इति वाच्यम् ?, कठिनत्वादिरूप इति चेत्, तथाहि—काष्ठादिषु दृश्यन्ते घुणादिजन्तवो जायमानास्ततो यत्र कठिनत्वादिविशेषस्तत्प्राणिमयं न शेषमिति, तदप्यसत्, व्यभिचारदर्शनात्, तथाहि—अविशिष्टेऽपि कठिनत्वादिविशेषे क्वचिद्भवति, क्वचित्कठिनत्वादिविशेषमन्तरेणापि सस्वेदजा नभसि च समूर्च्छिमा जायन्ते, किञ्च–समानयोनिका अपि विचित्रवर्णसंस्थाना' प्राणिनो दृश्यन्ते, तथा गोमयाद्येकयोनिसम्भविनोऽपि केचिन्नीलतनवोऽपरे पीतकाया अन्ये विचित्रवर्णा, संस्थानमप्येतेषा परस्पर विभिन्नं, तद्यदि भूतमात्रनिमित्तं चैतन्यं तत एकयोनिकाः सर्वेऽप्येकवर्णसंस्थाना भवेयुर्न च भवन्ति, तस्मादात्मान एव तत्तत्कर्मवशात् तथा तथोत्पद्यन्ते इति ॥ स्यादेतत्—आगच्छन् गच्छन् वा आत्मा नोपलभ्यते, केवल देहे सति संवेदनमुपलभामहे, देहाभावे च भस्मावस्थाया न, तस्मान्नात्मा, किन्तु संवेदनमात्रमेवैकं, तच्च देहकार्य देह एव च समाश्रित, कुड्ये चित्रवत्, नहि चित्र कुड्यविरहितमवतिष्ठते, नापि कुड्यान्तर सङ्क्रामति, आगतं वा कुड्यान्तरात्, किंतु कुड्य एवोत्पन्नं कुड्य एव च विलीयते, एवं सवेदनमपि, तदप्यसत्, आत्मा हि स्वरूपेणामूर्त्त', आन्तरमपि शरीरमतिसूक्ष्मत्वान्न चक्षुर्विषयः, तदुक्तमन्यैरपि—"अन्तरा भवदेहोऽपि, सूक्ष्मत्वान्नोपलभ्यते । निष्क्रामन् प्रविशन् वापि, नाभावोऽनीक्षणादपि ॥ १ ॥" तत आन्तरशरीरयुक्तोऽप्यात्मा आगच्छन् गच्छन् वा नोपलभ्यते, लिङ्गतस्तूपलभ्यते, तथाहि—कृमेरपि जन्तोस्तत्कालोत्पन्नस्याप्यस्ति निजशरीरविषयः प्रति-

णामान्तर तदयुक्त, परिणामान्तरस्यापि भूतस्वभावितया भूतवत् व्यञ्जकत्वस्योपपत्तेर्नावारकत्वस्य, अथान्यदेव भूतातिरिक्त किञ्चित् तदतीवासमीचीन, भूतातिरिक्ताभ्युपगमे 'चत्वार्येव पृथिव्यादीनि भूतानि तत्त्व'मिति तत्त्वसङ्ख्याव्याघातप्रसङ्गात्, अपि च-इदं चैतन्य प्रत्येकं वा भूताना धर्मः समुदायस्य वा ?, न तावत्प्रत्येकमनुपलम्भात्, नहि प्रतिपरमाणु सवेदनमुपलभ्यते, अपि च यदि प्रतिपरमाणु सवेदनं भवेत्तर्हि पुरुषसहस्रचैतन्यवृन्दमिव परस्पर भिन्नस्वभावमिति नैकरूप भवेत्, अथ चैकरूपमुपलभ्यते, अह पश्यामि अहं करोमीत्येवं सकलशरीराधिष्ठानादेकरूपतयाऽनुभवात्, अथ समुदायस्य धर्मस्तदप्यसत्, प्रत्येकमभावात्, नहि प्रत्येक यदसत्तत्समुदाये भवति, यथा रेणुषु तैल, स्यादेतद्—यद्वत् मद्याङ्गेषु प्रत्येकं मदशक्तिरदृष्टापि समुदायेऽपि भवन्ती दृश्यते तद्वच्चैतन्यमपि भविष्यति को दोष ?, तदसम्यक्, प्रत्येकमपि मद्याङ्गेषु मदशक्त्यनुयायिमाधुर्यादिगुणदर्शनात्, तथाहि—दृश्यते माधुर्यमिक्षुरसे धातकीपुष्पेषु च मनाक् विकलतोत्पादकत्वादि, न चैव चैतन्यं सामान्यतोऽपि भूतेषु प्रत्येकमुपलभ्यते, ततः कथ समुदाये तद्भवितुमर्हति ?, मा प्रापत्सर्वत्र सर्वस्य भावप्रसक्त्याऽतिप्रसङ्ग, किञ्च—यदि चैतन्य भूतधर्मत्वेन प्रतिपन्नं ततोऽवश्यमस्यानुरूपो धर्मी प्रतिपत्तव्य, आनुरूप्याभावे जतुकाठिन्ययोरिव परस्पर धर्मधर्मिभावानुपपत्तेः, न च चैतन्यं भूतानुरूपो धर्मी, वैलक्षण्यात्, तथाहि—चैतन्य बोधस्वरूपममूर्त्तं च, भूतानि च तद्विलक्षणानि, ततः कथं परस्परमेषा धर्मधर्मिभावसभवः ?, न च चैतन्यमिदं भूताना कार्यं, अत्यन्तविलक्षणतया कार्यकारणभावस्याप्ययोगात्, तथा चोक्तम्—"काठिन्याबोधरूपाणि, भूतान्यध्यक्षसिद्धित । चेतना च न तद्रूपा, सा कथ तत्फल भवेत् ? ॥१॥" अपि च—यदि भूतकार्यं चैतन्य तर्हि किं न सकलमपि जगत्

प्राणिमयं भवति, परिणतिविशेपसद्भावाभावादिति चेत्, ननु सोऽपि परिणतिविशेपसद्भाव सर्वत्रापि कस्मान्न भवति ? सोऽपि हि भूतमात्रनिमित्तक एव, तत' कथं तस्यापि क्वचित्कदाचिद्भाव' ?, अन्यच्च–स किरूप परिणतिविशेप इति वाच्यम् ?, कठिनत्वादिरूप इति चेत्, तथाहि—काष्ठादिषु दृश्यन्ते घुणादिजन्तवो जायमानास्ततो यत्र कठिनत्वादिविशेपस्तत्प्राणिमय न शेपमिति, तदप्यसत्, व्यभिचारदर्शनात्, तथाहि—अविशिष्टेऽपि कठिनत्वादिविशेपे क्वचिद्भवति, क्वचित्कठिनत्वादिविशेपमन्तरेणापि सस्वेदजा नभसि च समूर्च्छिमा जायन्ते, किञ्च–समानयोनिका अपि विचित्रवर्णसस्थाना' प्राणिनो दृश्यन्ते, तथा गोमयाद्येकयोनिसम्भविनोऽपि केचिन्नीलतनवोऽपरे पीतकाया अन्ये विचित्रवर्णा, संस्थानमप्येतेषा परस्पर विभिन्नं, तद्यदि भूतमात्रनिमित्त चैतन्यं तत एकयोनिकाः सर्वेऽप्येकवर्णसंस्थाना भवेयुर्न च भवन्ति, तस्मादात्मान एव तत्तत्कर्मवशात् तथा तथोत्पद्यन्ते इति ॥ स्यादेतत्—आगच्छन् गच्छन् वा आत्मा नोपलभ्यते, केवल देहे सति संवेदनमुपलभामहे, देहाभावे च भस्मावस्थाया न, तस्मान्नात्मा, किन्तु संवेदनमात्रमेवैकं, तच्च देहकार्य देह एव च समाश्रितं, कुड्ये चित्रवत्, नहि चित्र कुड्यविरहितमवतिष्ठते, नापि कुड्यान्तर सङ्क्रामति, आगतं वा कुड्यान्तरात्, किंतु कुड्य एवोत्पन्नं कुड्य एव च विलीयते, एवं सवेदनमपि, तदप्यसत्, आत्मा हि स्वरूपेणामूर्त्त, आन्तरमपि शरीरमतिसूक्ष्मत्वान्न चक्षुर्विपय', तदुक्तमन्यैरपि—"अन्तरा भवदेहोऽपि, सूक्ष्मत्वान्नोपलभ्यते । निष्क्रामन् प्रविशन् वापि, नाभावोऽनीक्षणादपि ॥ १ ॥" तत आन्तरशरीरयुक्तोऽप्यात्मा आगच्छन् गच्छन् वा नोपलभ्यते, लिङ्गतस्तूपलभ्यते, तथाहि—कृमेरपि जन्तोस्तत्कालोत्पन्नस्याप्यस्ति निजशरीरविपयः प्रति-

न्धः, उपघातकमुपलभ्य पलायनदर्शनात्, यश्च यद्विषयः प्रतिबन्धः स तद्विषयपरिशीलनाभ्यासपूर्वकः, तथा दर्शनात्, न खल्वत्यन्तापरिज्ञातगुणदोषवस्तुविषये कस्याप्याग्रह उपजायते, ततो जन्मादौ शरीराग्रहः शरीरपरिशीलनाभ्यासजनितसंस्कारनिबन्धन इति सिद्धमात्मनो जन्मान्तरादागमनं, तथा च केचित् पठन्ति—"शरीराग्रहरूपस्य, चेतसः सम्भवो यदा। जन्मादौ देहिनो दृष्टः, किं न जन्मान्तरागतिः ?॥ १॥" अथागतिः प्रत्यक्षतो नोपलभ्यते ततः कथमनुमानादवसीयते, नैष दोषः, अनुमेयविषये प्रत्यक्षवृत्तेरनभ्युपगमात्, परस्परविषयपरिहारेण हि प्रत्यक्षानुमानयोः प्रवृत्तिरिष्यते, ततः कथं स एव दोषः ?, आह च—"अनुमेयेऽस्ति नाध्यक्षमिति कैवात्र दुष्टता ?। अध्यक्षस्यानुमानस्य, विषयो विषयो नहि॥ १॥" अथ तज्जातीयेऽपि प्रत्यक्षवृत्तिमन्तरेण कथमनुमानमुदयितुमुत्सहते ?, न खलु यस्याग्निविषया प्रत्यक्षवृत्तिर्महानसेऽपि नासीत् तस्यान्यत्र क्षितिधरादौ धूमात् धूमध्वजानुमानं भवति, तदप्यसम्यक्, अत्रापि तज्जातीये प्रत्यक्षवृत्तिभावात्, तथाहि—आग्रहोऽन्यत्र परिशीलनाभ्यासप्रवृत्तः प्रत्यक्षत एवोपलब्धस्ततस्तदुपष्टम्भेनेहाप्यनुमानं प्रवर्त्तते, उक्तं च—आग्रहस्तावदभ्यासात्, प्रवृत्त उपलभ्यते। अन्यत्राध्यक्षतः साक्षात्ततो देहेऽनुमा न किम् ?॥ १॥" योऽपि चित्रदृष्टान्तः प्रागुपन्यस्तः सोऽप्ययुक्तो, वैषम्यात्, तथाहि—चित्रमचेतनं गमनस्वभावरहितं च, आत्मा च चेतनः कर्म्मवशात् गत्यागती च कुरुते, ततः कथं दृष्टान्तदार्ष्टान्तिकयोः साम्यम् ?, ततो यथा कश्चिद्देवदत्तो विवक्षिते ग्रामे कतिपयदिनानि गृहारम्भं कृत्वा ग्रामान्तरे गृहान्तरमास्थायावतिष्ठते, तद्वदात्माऽपि विवक्षिते भवे देहं परिहाय भवान्तरे देहान्तरमारचय्यावतिष्ठते। यच्चोक्तम्—'तच्च संवेदनं देहकार्य'मिति, तन्न, चाक्षुषादिकं संवे-

दनं देहाश्रितमपि कथञ्चिद्भवतु, चक्षुरादीन्द्रियद्वारेण तस्योत्पत्तिसम्भवात्, यत्तु मानसं तत्कथं ?, नहि तद्देहकार्यमुपपत्तिमत्, युक्त्ययोगात्, तथाहि—तन्मानसं ज्ञानं देहादुत्पद्यमानमिन्द्रियरूपाद्वा समुत्पद्येत अनिन्द्रियरूपाद्वा केशनखादिलक्षणात् ?, तत्र न तावदाद्य' पक्ष', इन्द्रियरूपात् तदुत्पत्ताविन्द्रियबुद्धिवद् वर्त्तमानार्थग्रहणप्रसक्तेः, इन्द्रिय हि वार्त्तमानिक एवार्थे व्याप्रियते, तत्सामर्थ्यादुपजायमानं मानसमपि ज्ञान पञ्चेन्द्रियज्ञानमिव वर्त्तमानार्थग्रहणपर्यवसितसत्ताकमेव भवेत्, अथ यदा चक्षू रूपविषये व्याप्रियते तदा रूपे विज्ञानमुत्पादयति न शेषकालं, ततस्तद्रूपविज्ञानं वर्त्तमानार्थविषय, वर्त्तमान एवार्थे चक्षुषो व्यापारात्, रूपविषयव्यावृत्यभावे च मनोज्ञानं, ततो न तत्प्रतिनियतकालविषयं, एवं शेषेष्वपि इन्द्रियेषु वाच्यं, ततः कथमिव मनोज्ञानस्य वर्त्तमानार्थग्रहणप्रसक्तिः ?, तदसाधीयो, यत इन्द्रियाश्रितं तदुच्यते यदिन्द्रियव्यापारमनुसृत्योपजायते इन्द्रियाणा च व्यापार' प्रतिनियते एव वार्त्तमानिके स्वस्वविषये, मनोज्ञानमपि यदीन्द्रियव्यापाराश्रितं तत ऐन्द्रियज्ञानमिव वार्त्तमानिकार्थग्राहकमेव भवेत्, अन्यथा इन्द्रियाश्रितमेव तन्न स्यात्, तथा च केचित्पठन्ति—"अक्षव्यापारमाश्रित्य, भवदक्षजमिष्यते। तद्व्यापारो न तत्रेति, कथमक्षभवं भवेत् ? ॥१॥" अथानिन्द्रियरूपादिति पक्षस्तदप्ययुक्तः, तस्याचेतनत्वात्, नन्वचेतनत्वादिति कोऽर्थः ?, यदि इन्द्रियविज्ञानरहितत्वादिति, तदिष्यत एव, यदि नामेन्द्रियविज्ञान ततो न भवति मनोविज्ञानं तु कस्मात् न भवति ?, मनोविज्ञान नोत्पादयतीत्यचेतनत्वं तदा तदेव विचार्यमाणमिति प्रतिज्ञार्थैकदेशासिद्धो हेतुः, तदप्यसत्, अचेतनत्वादिति किमुक्त भवति ?—स्वनिमित्तविज्ञानैः स्फुरच्चिद्रूपतयाऽनुपलब्धेः, स्पर्शादयो हि स्वस्वनिमित्तविज्ञानै· स्फुरच्चिद्रूपा

वन्धः, उपघातकमुपलभ्य पलायनदर्शनात्, यश्च यद्विषयः प्रतिवन्धः स तद्विषयपरिशीलनाभ्यासपूर्वक', तथा दर्शनात्, न खल्वत्यन्तापरिज्ञातगुणदोषवस्तुविषये कस्याप्याग्रह उपजायते, ततो जन्मादौ शरीराग्रह• शरीरपरिशीलनाभ्यासजनितसस्कारनिवन्धन इति सिद्धमात्मनो जन्मान्तरादागमनं, तथा च केचित् पठन्ति—"शरीराग्रहरूपस्य, चेतस सम्भवो यदा । जन्मादौ देहिनो दृष्ट', किं न जन्मान्तरागतिः ? ॥ १ ॥" अथागतिः प्रत्यक्षतो नोपलभ्यते ततः कथमनुमानादवसीयते, नैष दोष , अनुमेयविषये प्रत्यक्षवृत्तेरनभ्युपगमात्, परस्परविषयपरिहारेण हि प्रत्यक्षानुमानयो प्रवृत्तिरिष्यते, ततः कथ स एव दोष• ?, आह च—"अनुमेयेऽस्ति नाध्यक्षमिति कैवात्र दुष्टता ? । अध्यक्षस्यानुमानस्य, विषयो विषयो नहि ॥ १ ॥" अथ तज्जातीयेऽपि प्रत्यक्षवृत्तिमन्तरेण कथमनुमानमुदयितुमुत्सहते ?, न खलु यस्याग्निविषया प्रत्यक्षवृत्तिर्महानसेऽपि नासीत् तस्यान्यत्र क्षितिधरादौ धूमात् धूमध्वजानुमान भवति, तदप्यसम्यक्, अत्रापि तज्जातीये प्रत्यक्षवृत्तिभावात्, तथाहि—आग्रहोऽन्यत्र परिशीलनाभ्यासप्रवृत्त' प्रत्यक्षत एवोपलब्धस्ततस्तदुपष्टम्भेनेहाप्यनुमान प्रवर्त्तते, उक्त च—आग्रहस्तावदभ्यासात्, प्रवृत्त उपलभ्यते । अन्यत्राध्यक्षतः साक्षात्ततो देहेऽनुमा न किम् ? ॥ १ ॥" योऽपि चित्रदृष्टान्तः प्रागुपन्यस्तः सोऽप्ययुक्तो, वैषम्यात्, तथाहि—चित्रमचेतनं गमनस्वभावरहित च, आत्मा च चेतन कर्म्मवशात् गत्यागती च कुरुते, तत कथं दृष्टान्तदार्ष्टान्तिकयो साम्यम् ?, ततो यथा कश्चिद्देवदत्तो विवक्षिते ग्रामे कतिपयदिनानि गृहारम्भ कृत्वा ग्रामान्तरे गृहान्तरमास्थायावतिष्ठते, तद्वदात्माऽपि विवक्षिते भवे देह परिहाय भवान्तरे देहान्तरमास्थायावतिष्ठते । यच्चोक्तम्—'तच्च संवेदन देहकार्य'मिति, तत्र, चाक्षुषादिकं संवे-

ज्ञानादेव च तयोरपि प्रवृत्ते, तथाहि—यदि मन्दौ
त्वात्तदभावे न भवतीति चेत्, न, प्राणापानयोर्ज्ञानहेतुत्वायोगात्, ज्ञानादेव च तयोरपि प्रवृत्ते, तथाहि—यदि मन्दौ
प्राणापानौ निस्रष्टुमिष्येते ततो मन्दौ भवतो, दीर्घौ चेत्तर्हि दीर्घाविति, यदि पुनर्देहमात्रनिवृत्तौ प्राणापानौ प्राणापान-
निमित्त च विज्ञानं तर्हि नेत्थमिच्छावशात् प्राणापानप्रवर्त्तन भवेत्, नहि देहमात्रनिमित्ता गौरता श्यामता वा इच्छाव-
शात्प्रवर्त्तमाना दृष्टा, प्राणापाननिमित्त च यदि वो विज्ञानं ततः प्राणापाननिर्ह्रासातिशयसभवे ज्ञानस्यापि निर्ह्रासातिशयौ
स्याताम्, अवश्यं हि कारणे परिहीयमाने अभिवर्द्धमाने च कार्यस्यापि हानिरुपचयश्च भवति, यथा महति मृत्पिण्डे
महान् घटोऽल्पे चाल्पीयान्, अन्यथा कारणमेव तन्न स्यात्, न च भवतः प्राणापाननिर्ह्रासातिशयसंभवे विज्ञानस्यापि
निर्ह्रासातिशयौ, विपर्ययस्यापि भावात्, मरणावस्थाया प्राणापानातिशयसम्भवेऽपि विज्ञानस्य ह्रासदर्शनात्, स्यादेतत्—
तदानीं वातपित्तादिभिर्दोषैर्देहस्य विगुणीकृतत्वात् न प्राणापानातिशयसभवेऽपि ज्ञानस्यातिशयसम्भवोऽत एव मृताव-
स्थायामपि न चैतन्यं, देहस्य विगुणीकृतत्वात्, तदसमीचीनतरमेव, एव सति मृतस्यापि पुनरुज्जीवनप्रसक्ते, तथाहि—
मृतस्य दोषा समीभवन्ति, समीभवनं च दोषाणामवसीयते ज्वरादिविकारादर्शनात्, समत्वं चारोग्यं, तथा चाहु-
र्वृद्धा.—"तेषा समत्वमारोग्य क्षयवृद्धी विपर्यय"इति, आरोग्यलाभत्वे देहस्य पुनरुज्जीवनं भवेत्, अन्यथा देह. कार-
णमेव चेतसो न स्यात्, तद्विकारभावाभावाननुविधानात्, एव हि देहकारणता विज्ञानस्य श्रद्धेया स्यात् यदि पुनरुज्जीवनं
भवेत्, स्यादेतद्—अयुक्तमिद पुनरुज्जीवनप्रसङ्गापादन, यतो यद्यपि दोषा देहस्य वैगुण्यमाधाय निवृत्तास्तथापि न
तत्कृतस्य वैगुण्यस्य निवृत्ति', नहि दहनकृतो विकारः काष्ठे दहननिवृत्तौ निवर्त्तमानो दृष्ट, तदयुक्तम्, इह हि कचि-

उपलभ्यन्ते, कथ तेभ्यो मनोज्ञानं भवतीति प्रतियन्ति सुधिय, आह च—"चेतयन्तो न दृश्यन्ते, केशश्मश्रुनखादय । ततस्तेभ्यो मनोज्ञान, भवतीत्यतिसाहसम् ॥ १ ॥" अपिच—यदि केशनखादिप्रतिबद्धं मनोज्ञानं ततस्तदुच्छेदे मूलत एव न स्यात्, तदुपघाते चोपहतं भवेत्, नच भवति, तस्मान्नाय पक्ष क्षोदक्षम । किञ्च—मनोज्ञानस्य सूक्ष्मार्थभेत्तृत्वस्मृतिपाटवादयो विशेषा अन्वयव्यतिरेकाभ्यामभ्यासपूर्वका दृष्टाः, तथाहि—तदेव शास्त्रमीहापोहादिप्रकारेण यदि पुन पुन परिभाव्यते ततः सूक्ष्मतरार्थविबोध उल्लसति स्मृतिपाटवं चापूर्वमुज्जृम्भते, एव चैकशास्त्राभ्यासतः सूक्ष्मार्थभेत्तृत्वशक्तौ पाटवशक्तौ चोपजातायामन्येष्वपि शास्त्रान्तरेषु अनायासेनैव सूक्ष्मार्थावबोध स्मृतिपाटव चोल्लसति, तदेवमभ्यासहेतुका सूक्ष्मार्थभेत्तृत्वादयो मनोज्ञानस्य विशेषा दृष्टा, अथ च कस्यचिदिद जन्माभ्यासव्यतिरेकेणापि दृश्यते, ततोऽवश्य पारलौकिकाभ्यासहेतुका इति प्रतिपत्तव्यं, कारणेन सह कार्यस्यान्यथानुपपन्नत्वप्रतिबन्धतोऽदृष्टतत्कारणस्यापि तत्कार्यत्वविनिश्चिते, तत सिद्ध परलोकयायी जीव, सिद्धे च तस्मिन् परलोकयायिनि यदि कथञ्चिदुपकारी चाक्षुषादेर्विज्ञानस्य देहो भवेत् भवतु न कश्चिद्दोषः, क्षयोपशमहेतुतया देहस्यापि कथञ्चिदुपकारित्वाभ्युपगमात्, न चैतावता तन्निवृत्तौ सर्वथा तन्निवृत्ति, नहि वह्नेरासादितविशेषो घटो वह्निनिवृत्तौ समूलोच्छेद निवर्त्तते, केवलं विशेष एव कश्चनापि, यथा सुवर्णद्रवता, एवमिहापि देहनिवृत्तौ ज्ञानविशेष एव कोऽपि तत्प्रतिबद्धो निवर्त्तता, न पुन समूल ज्ञानमपि, यदि पुनर्देहमात्रनिमित्तकमेव विज्ञानमिष्येत देहनिवृत्तौ च निवृत्तिमत्तर्हि देहस्य भस्मावस्थाया मा भूद्, देहे तु तथाभूते एवावतिष्ठमाने मृतावस्थाया कस्मान्न भवति ?, प्राणापानयोरपि हेतु-

न पुनरत्यन्तासतश्चैतन्यस्योत्पादनार्थं, तथाऽनभ्युपगमात्, दोषकृताश्च विकारा मृतावस्थाया स्वयमेव निवृत्ता', ज्वरादेरदर्शनात्, तत. किं वैद्यौषधान्वेषणेनेति तदवस्थ एव पुनरुज्जीवनप्रसङ्ग , अपि च-कश्चिद्दोषाणामुपशमेऽप्यकस्मान्म्रियते, कश्चिच्चातिदोषदुष्टत्वेऽपि जीवति, तदेतद्भवन्मते कथमुपपत्तिमर्हति ?, तथा च केचिद्ब्रुवते-'दोषस्योपशमेऽप्यस्ति, मरण कस्यचित् पुन' । जीवन दोषदुष्टत्वेऽप्येतन्न स्याद् भवन्मते ॥ १ ॥' अर्हता तु शासने यावद् आयु·कर्म विजृम्भते तावद् दोषैरतिपीडितोऽपि जीवति, आयु'कर्मक्षये च दोषाणामधःकृतावपि म्रियते, तन्न देहमात्रकारण सवेदन, अन्यच्च-देहः कारणं सवेदनस्य सहकारिभूत वा उपादानभूत वा ?, यदि सहकारिभूतं तदिष्यत एव, देहस्यापि क्षयोपशमे हेतुतया कथंचिद्विज्ञानहेतुत्वाभ्युपगमात्, अथोपादानभूतं तदयुक्त, उपादान हि तत् तस्य यद्विकारेण यस्य विकारो, यथा मृद् घटस्य, न च देहविकारेणैव विकारः संवेदनस्य, देहविकाराभावेऽपि भयशोकादिना तद्विकारदर्शनात्, न तद् देह उपादानं सवेदनस्य, तथा च वदन्त्युपादानलक्षणमपरे—"अविकृत्य हि यद् वस्तु, य. पदार्थो विकार्यते । उपादानं न तत्तस्य, युक्तं गोगवयादिवत् ॥१॥" एतेन यदुच्यते-मातापितृचैतन्यं सुतचैतन्यस्योपादानमिति, तदपि प्रतिक्षिप्तं, तत्रापि तद्विकारे विकारित्व तदविकारे चाविकारित्वमिति नियमादर्शनात्, अन्यच्च—यद्यस्योपादान तत्तस्मादभेदेन व्यवस्थितं, यथा मृदो घट', मातापितृचैतन्यं च सुतचैतन्यस्योपादानं ततः सुतचैतन्य मातापितृचैतन्यादभेदेन व्यवतिष्ठते, तस्माद् यत्किञ्चिदेतत्, तन्न भूतधर्मो भूतकार्यं वा चैतन्य, किं त्वात्मनो गुण इति, तद्गुणस्य प्रत्यक्षसिद्धत्वात्प्रत्यक्षसिद्ध आत्मा, अनुमानसिद्धश्च, तच्चानुमानमिदं—रूपादीन्द्रियाणि विद्यमानप्रयोजकानि कर्मकरणत्वे सति ग्राह्यग्राहकरूप-

दनिवर्त्त्यविकारारम्भक, यथा वह्नि काष्ठे, श्यामतामात्रमपि वह्निता कृतं काष्ठे वह्निनिवृत्तौ न निवर्त्तते, किञ्चित् निवर्त्त्यविकारारम्भकं, यथा स एवाग्नि सुवर्णे, तथाहि—अग्निना कृता सुवर्णे द्रवता अग्निनिवृत्तौ निवर्त्तते, तत्र वाय्वादयो दोषा निवर्त्त्यविकारारम्भकाश्चिकित्साप्रयोगदर्शनात्, यदि पुनरनिवर्त्त्यविकारारम्भका भवेयुस्तर्हि न तद्विकारनिवर्त्तनाय चिकित्सा विधीयेत, वैफल्यप्रसङ्गात्, न च वाच्यं मरणात् प्राक्तनदोषा निवर्त्त्यविकारारम्भका मरणकाले त्वनिवर्त्त्यविकारारम्भका इति, एकस्य एकत्रैव निवर्त्त्यानिवर्त्त्यविकारारम्भकत्वायोगात्, नह्येकमेव तत्रैव निवर्त्त्यविकारम्भकमनिवर्त्त्यविकारारम्भक च भवितुमर्हति, तथा अदर्शनात्, ननु द्विविधो हि व्याधि—साध्योऽसाध्यश्च, तत्र साध्यो निवर्त्त्य', तमेव चाधिकृत्य चिकित्सा फलवती, असाध्योऽनिवर्त्तनीय, न च साध्यासाध्यभेदेन व्याधिद्वैविध्यमप्रतीत, सकललोकप्रसिद्धत्वाद्, व्याधिश्च दोषवैषम्यकृत', ततः कथं दोषाणा निवर्त्त्यानिवर्त्त्यविकारारम्भकत्वमनुपपन्नमिति, तदप्यसत्, भवन्मतेनासाध्यव्याध्यनुपपत्ते, तथाहि—असाध्यता व्याधे' क्वचिदायुःक्षयात्, तथाहि—तस्मिन्नेव व्याधौ समानेऽप्यौषधवैद्यसम्पर्के कश्चिन्म्रियते कश्चिन्न, क्वचित्पुनः प्रतिकूलकर्मोदयात्, प्रतिकूलकर्मोदयजनितो हि श्वित्रादिव्याधिरौषधसहस्रैरपि कश्चिदसाध्यो भवति, एतच्च द्विविधमपि व्याधेरसाध्यत्वमर्हतामेव मते सङ्गच्छते, न भवतो भूतमात्रतत्त्ववेदिन', क्वचित्पुनरसाध्यो व्याधिर्दोषकृतविकारनिवर्त्तनसमर्थस्यौषधस्याभावात् वैद्यस्य वा, वैद्यौषधसम्पर्काभावे हि व्याधि प्रसर्पन् सकलमप्यायुरुपक्रमते, ननु वैद्यौषधसम्पर्काभावादेवास्माकमपि पुनरुज्जीवनं न भविष्यति, नहि तदस्ति किञ्चित् औषधं वैद्यो वा यत् पुनरुज्जीवयति, तदप्ययुक्तं, वैद्यौषधे हि दोषविकारनिवर्त्तनार्थमिष्येते,

प्रामाण्यमभ्युपेय, सर्वज्ञमूलस्यावश्यं प्रमाणत्वेनाभ्युपगमार्हत्वाद्, अन्यथा सम्यक्प्रमाणाप्रमाणविभागापरिणते॰ प्रेक्षावत्ताक्षितिप्रसङ्गात्, अथ कथमेतत्प्रत्येयं यथाऽयमागम सर्वज्ञमूल इति ?, उच्यते, यदुक्तोऽर्थ॰ प्रत्यक्षेणानुमानेन च न बाध्यते नापि पूर्वापरव्याहतः सोऽवसीयते सर्वज्ञप्रणीतोऽन्यस्य तथारूपत्वासम्भवात्, ततस्तस्माद्यत्सिद्धं तत्सर्वं सुसिद्धम्, उक्त च—दिट्ठेण य इट्ठेण य जमि विरोहो न जुज्जइ कहिंचि । सो आगमो ततो जं नाण तं सम्मनाणति ॥ १ ॥ ( धर्म॰ ५१९ ) तत॰ प्रत्यक्षानुमानागमप्रमाणसिद्धत्वाद्वेदप्रतिष्ठितत्वाच्च सौम्य ! अस्ति जीव इति प्रतिपत्तव्यम्, इह वेदपदोन्यासस्तेन वेदाना प्रमाणत्वेनाङ्गीकृतत्वात् ॥

छिन्नम्मि ससयम्मि अ जिणेण जर-मरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥६०१॥

उक्तप्रमाणेन जिनेन—भगवता वर्द्धमानस्वामिना जरामरणाभ्यामुक्तलक्षणाभ्या विप्रमुक्त इव विप्रमुक्त॰ तेन छिन्ने—निराकृते संशये स इन्द्रभूति॰ पञ्चभिः खण्डिकशतै॰—छात्रशतै॰ सह श्रमण॰ प्रव्रजित॰, प्रव्रजितः सन् साधु॰ संवृत्त इत्यर्थः, ॥

प्रथमो गणधर समाप्त

तं पव्वइअं सोउं बीओ आगच्छई अमरिसेणं । वच्चामि णमाणेमी पराजिणित्ता ण तं समणं ॥ ६०२ ॥

तं—इन्द्रभूति प्रव्रजित श्रुत्वा द्वितीय॰—खल्वग्निभूतिरत्रान्तरे अमर्षेण प्राग्व्यावर्णितस्वरूपेण हेतुभूतेन आगच्छति भगवत्समीपं, केनाभिप्रायेणेत्याह—व्रजामि, णमिति वाक्यालङ्कारे आनयामि, निजभ्रातरमिन्द्रभूतिमिति गम्यते, पराजित्य णमिति पूर्ववत् तं श्रमणमिन्द्रजालिककल्पमिति । पुनरपि किं चिन्तयन्नसावागत इत्याह—

त्वात्, ये कर्म्मकरणत्वे सति ग्राह्यग्राहकरूपे ते विद्यमानप्रयोजके, यथा सदशाय'पिण्डी, कर्मकरणरूपाणि च सन्ति ग्राह्यग्राहकरूपाणि रूपादीन्द्रियाणि ततो विद्यमानप्रयोजकानीति, न चेन्द्रियाणा स्वत उपलम्भकत्व येन रूपादिग्रहण प्रति तेषा कर्तृत्वमेवोपगम्येत न करणत्वं, अचेतनत्वेन स्वत उपलम्भकृत्त्वायोगात्, तथा चात्र प्रयोग –यदचेतन तन्नो-पलब्धृ यथा घट, अचेतनानि च द्रव्येन्द्रियाणि, न चायमसिद्धो हेतु, यतः खलु द्रव्येन्द्रियाणि निर्वृत्त्युपकरण-रूपाणि, निर्वृत्त्युपकरणे च पुद्गलमये, पुद्गलमय च सर्वमचेतनं, पुद्गलाना काठिन्याबोधरूपतया चैतन्य प्रति धर्म्म-त्वायोगात्, धर्म्मानुरूपो हि सर्वत्रापि धर्मी, यथा काठिन्यं प्रति पृथिवी, यदि पुनरनुरूपत्वाभावेऽपि धर्म्मधर्म्मिभावो भवेत् तत काठिन्यजलयोरपि स भवेत्, न च भवति, तस्मादचेतना. पुद्गलाः, तथा चोक्तम्—"बोहसभावममुत्तं विसय-परिच्छेयग च चेयन्न । विवरीयसहावाणि य भूयाणि जगप्पसिद्धाणि ॥ १ ॥ ता धम्मिधम्मभावो कहमेएसिं अणव्भु-वगमे य । अणुरूवत्ताभावे काठिन्नजलाण किं न भवे ? ॥ २ ॥ ( धर्मस ५०–५१ ) तत. स्वत उपलम्भकत्वाभावात् रूपादिग्रहणं प्रतीन्द्रियाणा करणभाव एव, न कर्त्तृभाव इति स्थितम्। अथवेदमनुमान–सभोक्तृकमिद शरीर भोग्यत्वात्, स्थालस्थितौदनवत्, भोग्यता च शरीरस्य जीवेन तथा निवसता भुज्यमानत्वात्, द्वयोरपि च प्रयोगयो. साध्यसाध-नप्रतिबन्ध', प्रतिबन्धसिद्धिर्दृष्टान्ते प्रत्यक्षप्रमाणसिद्धेति नोक्तलिङ्गलिङ्गिसम्बन्धाग्रहरूपदोषावकाश, आगमगम्योऽप्येष जीव, तथा चागम —"अणिंदियगुणं जीव, दुन्नेय मंसचक्खुणा । सिद्धा पस्संति सव्वन्नू, नाणसिद्धा य साहुणो ॥१॥" (द०अ० ५–३४ भा ) अत्र ज्ञानसिद्धा. साधवो–भवस्थकेवलिन . शेष सुगम, न चागमाना परस्परविरुद्धार्थतया सर्वेषामप्य-

किं मन्ने अत्थि कम्मं ? उयाहु नत्थित्ति ससओ तुज्झं । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥२०४॥

हे अग्निभूते ! गौतम ! त्वमेतत् मन्यसे-चिन्तयसि, यदुत कर्म्म-ज्ञानावरणीयादि किमस्ति उत नास्तीति ?, नन्वयमनुचितस्तव सशय', यतोऽय सशयस्तव विरुद्धवेदपदश्रुतिनिबन्धन', तेपा च वेदपदानामर्थ सम्यक् न जानासि, यथा न जानासि तथा वक्ष्याम , तेपामयमर्थो वक्ष्यमाणलक्षण इति गाथाक्षरार्थ. । तानि च वेदपदान्यमूनि—"पुरुप एवेद ग्नि सर्वं यद्भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति यदेजति यन्नेजति यद् दूरे यदु अन्तिके यदन्तरस्य सर्वस्यास्य वाह्यत" इत्यादि, तथा 'पुण्य पुण्येने'त्यादि, तेपामयमर्थस्तव चेतसि विपरिवर्त्तते-पुरुपः-आत्मा, एवकारोऽवधारणे, स च पुरुपातिरिक्तस्य कर्मप्रकृतीश्वरादेर्व्यवच्छेदार्थ., इदं-सर्वं प्रत्यक्षं वर्त्तमानं चेतनाचेतनस्वरूपं ग्निमिति वाक्यालङ्कारे यद्भूतम्-अतीतं यच्च भाव्य-भविष्यत्, मुक्तिससारावपि स एव, पुरुप इत्यर्थः, उतामृतत्वस्येशान इति, उतशब्दोऽपिशब्दार्थ', स च समुच्चये, अमृतत्वस्य च-अमरणभावस्य मोक्षस्य ईशानः-प्रभु', यदन्नेनातिरोहतीति चशब्दस्य लुप्तस्य दर्शनाद् यश्चान्नेन-आहारेणातिरोहति-अतिशयेन वृद्धिमुपैति, तथा यत् एजति-चलति पश्वादि, यत् नेजति-न चलति पर्वतादि, अत्र ऐकारो न भवत्यार्पत्वात्, यद् दूरे मेर्वादि यदु अन्तिके उशब्दोऽवधारणे यदन्तिके-समीपे तत्सर्वं पुरुप एव, तथा यत् अन्त -मध्ये अस्य-चेतनाचेतनस्य सर्वस्य यदेव सर्वस्यास्य वाह्यं तत्सर्वं पुरुप एव, ततस्तदतिरिक्तस्य कर्म्मणः किल सत्ता दुःश्रद्धेयेति । तथा न प्रत्यक्षप्रमाणगम्यमिदं कर्म्म, अतीन्द्रियत्वात्, नाप्यनुमानगम्य, तत्र प्रत्यक्षाप्रवृत्ते', नाप्यागमगम्यम्, आगमाना परस्परविरुद्धार्थभापितया प्रामाण्यायोगात्, अन्यच्च-अमूर्त्त आत्मा मूर्त्तं च कर्म्माभ्युपग-

छलिओ छलाइणा सो मन्ने माइदजालिओ वावि । को जाणइ कह वत्तं इत्ताहे वट्टमाणी से ?॥ १२७ भा०॥

दुर्जयस्त्रिभुवनस्यापि मज्ञाता इन्द्रभूतिः, केवलमहमिदं मन्ये–छलादिना छलितोऽसौ तेन, स हि छलजातिनिग्रहस्यानग्रहणनिपुण सम्भाव्यते, अथवा मायेन्द्रजालिकः कोऽपि निश्चितमसौ येन तस्यापि जगद्गुरोर्मद्भ्रातुर्भ्रमित चेत, यदिवा को जानाति तयो किमपि वादस्थानं कथमपि वृत्त ?, मत्परोक्षत्वाद्, अत ऊर्द्ध्वं मयि तत्र गते 'से' तस्य छलादिकुशलस्य मायेन्द्रजालकुशलस्य वा 'वट्टमाणी'ति या काचित् वार्त्ता वर्त्तनी वा भविष्यति, ता द्रक्ष्यत्ययं समग्रोऽपि लोक इति गम्यते ॥ इदं च तेन तत्रागच्छता प्रोक्तम्—

सो पक्खंतरमेगंपि जाइ जइ मे तओ मि तस्सेव । सीसत्तं हुज्ज गओ वुत्तुं पत्तो जिणसगासं ॥ १२८ भा०॥

को जानाति तावदिन्द्रभूतिस्तेन कथमपि निर्जितः ?, मम पुनरेकमपि पक्षान्तर–पक्षविशेषं स यदि याति, किमुक्तं भवति ?–मद्विहितस्य सहेतूदाहरणस्य पक्षविशेषस्य यद्युत्तरप्रदानेन कथमपि पार गच्छति ततो मीति वाक्यालङ्कारे तस्यैव श्रमणस्य शिष्यत्वेन गतोऽहं भवेयमिति उक्त्वा प्राप्तो जिनस्य–भगवतो महावीरस्य सकाश–समीपम् ॥ तत• किमित्याह—

आभट्ठो य जिणेण जाइजरामरणविप्पमुक्केण । नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीण ॥ ६०३ ॥
हे अग्गिभूति गोयम ! सागयमुत्ते जिणेण चिंतेइ । नामंपि मे वियाणइ, अहवा को मं न याणाइ ?॥१२९ भा०॥
जइ वा हिययगयं मे ससय मन्नेज्ज अहव छिंदिज्जा । तो होज्ज विम्हओ मे इय चिंतंतो पुणो भणिओ ॥१३० भा०॥

इद गाथात्रयमपि पूर्ववदेव ॥

किं मन्ने अत्थि कम्मं? उयाहु नत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥६०४॥

हे अग्निभूते ! गौतम ! त्वमेतत् मन्यसे-चिन्तयसि, यदुत कर्म्म-ज्ञानावरणीयादि किमस्ति उत नास्तीति ?, नन्वयमनुचितस्तव संशय , यतोऽयं संशयस्तव विरुद्धवेदपदश्रुतिनिबन्धनः, तेषां च वेदपदानामर्थं सम्यक् न जानासि, यथा न जानासि तथा वक्ष्याम·, तेषामयमर्थो वक्ष्यमाणलक्षण इति गाथाक्षरार्थ· । तानि च वेदपदान्यमूनि—"पुरुष एवेदं ग्नि सर्वं यद्भूतं यच्च भाव्यं उतामृतत्वस्येशानो यदन्नेनातिरोहति यदेजति यन्नेजति यद् दूरे यदु अन्तिके यदन्तरस्य सर्वस्यास्य बाह्यत" इत्यादि, तथा 'पुण्य· पुण्येने'त्यादि, तेषामयमर्थस्तव चेतसि विपरिवर्त्तते-पुरुष'—आत्मा, एवकारोऽवधारणे, स च पुरुषातिरिक्तस्य कर्म्मप्रकृतीश्वरादेर्व्यवच्छेदार्थ·, इदं—सर्वं प्रत्यक्षं वर्त्तमानं चेतनाचेतनस्वरूपं ग्निमिति वाक्यालङ्कारे यद्भूतम्—अतीत यच्च भाव्य—भविष्यत्, मुक्तिसंसारावपि स एव, पुरुष इत्यर्थः, उतामृतत्वस्येशान इति, उतशब्दोऽपिशब्दार्थ·, स च समुच्चये, अमृतत्वस्य च—अमरणभावस्य मोक्षस्य ईशानः—प्रभु', यदन्नेनातिरोहतीति चशब्दस्य लुप्तस्य दर्शनाद् यच्चान्नेन—आहारेणातिरोहति—अतिशयेन वृद्धिमुपैति, तथा यत् एजति—चलति पश्वादि, यत् नेजति—न चलति पर्वतादि, अत्र ऐकारो न भवत्यार्षत्वात्, यद् दूरे मेर्वादि यदु अन्तिके उशब्दोऽवधारणे यदन्तिके—समीपे तत्सर्वं पुरुष एव, तथा यत् अन्त·—मध्ये अस्य—चेतनाचेतनस्य सर्वस्य यदेव सर्वस्यास्य बाह्यं तत्सर्वं पुरुष एव, ततस्तदतिरिक्तस्य कर्म्मणः किल सत्ता दुःश्रद्धेयेति । तथा न प्रत्यक्षप्रमाणगम्यमिदं कर्म्म, अतीन्द्रियत्वात्, नाप्यनुमानगम्य, तत्र प्रत्यक्षाप्रवृत्ते', नाप्यागमगम्यम्, आगमाना परस्परविरुद्धार्थभाषितया प्रामाण्यायोगात्, अन्यच्च—अमूर्त्त आत्मा मूर्त्तं च कर्म्माभ्युपग-

म्यते, तत' कथममूर्त्तस्य मूर्त्तेन सह सयोग , सयुज्यमानता किल मूर्त्तानामेव धर्म्म इति प्रवाद', तथा कथममूर्त्तस्य मूर्त्तेन कर्म्मणाऽनुग्रहोपघातौ ?, न खलु नभसश्चन्दनादिनोपग्रहो लकुटादिना चोपघातो भवति, अथ च श्रुतिषु कर्म्मसत्ता गीयते "पुण्यः पुण्येन कर्मणा, पापः पापेन कर्मणा" ततो न विद्म.—किमस्ति कर्म्म किं वा नास्तीति तवाभिप्राय', तत्र वेदपदानामर्थं न जानासि, चशब्दात् युक्ति भावार्थं च, तेषा हि वेदपदानामयमेकवाक्यतया व्यवस्थितोऽर्थ —इह त्रिविधानि वेदवाक्यानि–कानिचिद् विधिवादपराणि कानिचिदर्थवादप्रधानानि अपराणि त्वनुवादपराणि, तत्र 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यादीनि विधिवादपराणि, अर्थवादस्तु द्विधा–स्तुत्यर्थवादो निन्दार्थवादश्च, तत्र स्तुत्यर्थवादप्रधानानि यथा 'स सर्ववित् यस्यैषा महिमा भुवि आदित्ये, ब्रह्मपुरे ह्येष व्योम्नि आत्मा सुप्रतिष्ठितस्तमक्षर वेदयते, अथ यस्तु सर्वज्ञ' स सर्ववित् सर्वमेवाविश' इत्यादि, निन्दार्थवादप्रधानानि यथा 'एष कः प्रथमो यज्ञो ?, योऽग्निष्टोम , योऽनेन अनिष्ट्वा अन्येन यजते स गर्त्तमभ्यपत'दित्यादि, अत्र पशुमेधादीना प्रथम करणं निन्द्यते इत्यय निन्दार्थवाद', 'द्वादश मासाः संवत्सर अग्निरुष्णोऽग्निर्हिमस्य भेषज'मित्यादीनि त्वनुवादप्रधानानि, लोके प्रसिद्धस्यैवार्थस्य एतैरनुवादात्, पुरुष एवेद ग्निमित्यादीन्यपि पुरुषस्तुतिपराणि, यदिवा जात्यादिमदत्यागायाद्वैतभावनाप्रतिपादकानि न कर्म्मसत्ताप्रतिषेधकानि, इत्थ चैतदङ्गीकर्त्तव्य, न खल्वकर्म्मण आत्मनः कर्तृत्वोपपत्ति , एकान्तशुद्धतया प्रवृत्तिनिबन्धनाभावात्, न च वाच्यं शरीरवान् खल्वीशान आरम्भ उपपत्तिमान्, स्वशरीरारम्भेऽपि तस्योक्तदोषानतिक्रमात्, अथ ब्रूषे–अन्यस्तत्शरीरारम्भाय व्याप्रियते, स च शरीरवान् सत्तारम्भक इति, तदप्यसम्यक्, तत्रापि विकल्पद्वयप्रवृत्ते , स ह्यन्यस्तत्शरीरारम्भाय व्याप्रियते

स शरीरी अशरीरीति वा ?, तत्र यद्याद्य॰ पक्षस्ततः स शरीरी कथम् ?, अन्येन तच्छरीरकरणादिति चेत् ननु तत्रापीयमेव वार्त्तेत्यनवस्थानुषङ्ग , अथाशरीरीति पक्षस्तदप्ययुक्तम्, अशरीरितया तस्याप्यारम्भकत्वायोगात्, स्यादेतद्–एष न. सिद्धान्तो यदा कर्म्मरहितस्याप्यात्मनः शरीरकरणेच्छोपजायते तदा शरीरमारभते, आत्मन सकलशक्तिसमन्वितत्वात्, अत एव मुक्तात्मनो न भूय शरीरित्वप्रसङ्ग॰, शरीरकरणेच्छाया एवाभावात्, तदप्यश्लील, शुद्धस्य सतो रागद्वेपरहित; तया शरीरकरणेच्छाया एवाप्रवृत्ते , मुक्तात्मवत्, तत॰ कर्म्मसद्वितीय॰पुरुष॰ कर्त्तेति न सर्वाणि वेदपदानि कर्म्मसत्ताप्रतिपेधकानि, न तत् कर्म प्रत्यक्षप्रमाणगोचरातिक्रान्त, मया साक्षात्प्रत्यक्षत उपलभ्यमानत्वात्, नाप्यनुमानगोचरातीतं भवतोऽप्यनुमानसिद्धत्वात्, तच्चेदमनुमानं–शरीरान्तरपूर्वक बालशरीरमिन्द्रियादिमत्त्वात् युवशरीरवत्, न च वाच्य जन्मान्तरानीतशरीरपूर्वकत्वस्यास्माभिरभ्युपगतत्वात्सिद्धसाध्यता, जन्मान्तरशरीरस्यापान्तरालगतावभावेन तत्पूर्वकत्वायोगात्, तस्मात्कार्म्मणशरीरपूर्वक बालशरीरमिति सिद्ध कर्म्म, अन्यथा प्रतिनियतदेशस्थानगर्भप्राप्तिर्नरपश्वादिरूपेण वैचित्र्य वा नोपपत्तिमत्, नियामकाभावात्, उक्तं च—“आत्मत्वेनाविशिष्टस्य, वैचित्र्यं तस्य यद्वशात्। नरादिरूप तच्चित्रमदृष्ट कर्म्मसञ्ज्ञकम् ॥ १ ॥” अथ स्वभाव एव नियामको वैचित्र्यस्य न कर्म्मेति कर्म्मासिद्धि॰, तदप्यनुपपन्न, विकल्पाभ्यामयोगात्, स हि स्वभावो वस्तुविशेपो वा स्यात् वस्तुधर्म्मो वा ?, न तावत् वस्तुविशेपस्तस्याप्रामाणिकत्वात्, नहि स वस्तुविशेप॰ प्रत्यक्षप्रमाणसिद्धो नाप्यनुमानसिद्धो न चाप्यागमगम्य इत्यप्रमाणक एव, अन्यच्च–स वस्तुविशेपो मूर्त्तो वा अमूर्त्तो वा ?, यदि मूर्त्त कर्म्मणोऽस्य न कश्चिद्भेदोऽन्यत्र सञ्ज्ञाभेदात्, भवता हि वस्तुविशेप इति व्यवह्रियते मया तु कर्म्मेति,

म्यते, ततः कथममूर्त्तस्य मूर्त्तेन सह सयोग , सयुज्यमानता किल मूर्त्तानामेव धर्म्म इति प्रवाद , तथा कथममूर्त्तस्य मूर्त्तेन कर्म्मणाऽनुग्रहोपघातौ ?, न खलु नभसश्चन्दनादिनोपग्रहो लकुटादिना चोपघातो भवति, अथ च श्रुतिषु कर्म्मसत्ता गीयते "पुण्यः पुण्येन कर्मणा, पापः पापेन कर्मणा" ततो न विद्म'—किमस्ति कर्म्म किं वा नास्तीति तवाभिप्राय', तत्र वेदपदानामर्थं न जानासि, चशब्दात् युक्ति भावार्थं च, तेषा हि वेदपदानामयमेकवाक्यतया व्यवस्थितोऽर्थ.—इह त्रिविधानि वेदवाक्यानि—कानिचिद् विधिवादपराणि कानिचिदर्थवादप्रधानानि अपराणि त्वनुवादपराणि, तत्र 'अग्निहोत्र जुहुयात्स्वर्गकाम' इत्यादीनि विधिवादपराणि, अर्थवादस्तु द्विधा—स्तुत्यर्थवादो निन्दार्थवादश्च, तत्र स्तुत्यर्थवादप्रधानानि यथा 'स सर्ववित् यस्यैषा महिमा भुवि आदित्ये, ब्रह्मपुरे ह्येष व्योम्नि आत्मा सुप्रतिष्ठितस्तमक्षर वेदयते, अथ यस्तु सर्वज्ञ स सर्ववित् सर्वमेवाविश' इत्यादि, निन्दार्थवादप्रधानानि यथा 'एष क प्रथमो यज्ञो ?, योऽग्निष्टोम , योऽनेन अनिष्ट्वा अन्येन यजते स गर्त्तमभ्यपत'दित्यादि, अत्र पशुमेधादीना प्रथमं करण निन्द्यते इत्यय निन्दार्थवाद., 'द्वादश मासा सवत्सरः अग्निरुष्णोऽग्निर्हिमस्य भेषज'मित्यादीनि त्वनुवादप्रधानानि, लोके प्रसिद्धस्यैवार्थस्य एतैरनुवादात्, पुरुष एवेद ग्निमित्यादीन्यपि पुरुषस्तुतिपराणि, यदिवा जात्यादिमदत्यागायाद्वैतभावनाप्रतिपादकानि न कर्म्मसत्ताप्रतिषेधकानि, इत्थ चैतदङ्गीकर्त्तव्य, न खल्वकर्म्मण आत्मनः कर्तृत्वोपपत्ति , एकान्तशुद्धतया प्रवृत्तिनिबन्धनाभावात्, न च वाच्य शरीरवान् खल्वीशान आरम्भ उपपत्तिमान्, स्वशरीरारम्भेऽपि तस्योक्तदोषानतिक्रमात्, अथ ब्रूषे—अन्यस्तत्शरीरारम्भाय व्याप्रियते, स च शरीरवान् सत्तारम्भक इति, तदप्यसम्यक्, तत्रापि विकल्पद्वयप्रवृत्ते , स ह्यन्यस्तत्शरीरारम्भाय व्याप्रियते

स शरीरी अशरीरीति वा ?, तत्र यद्याद्य. पक्षस्ततः स शरीरी कथम् ?, अन्येन तच्छरीरकरणादिति चेत् ननु तत्रापीयमेव वार्त्तेत्यनवस्थानुषङ्ग., अथाशरीरीति पक्षस्तदप्ययुक्तम्, अशरीरितया तस्याप्यारम्भकत्वायोगात्, स्यादेतद्—एष नः सिद्धान्तो यदा कर्म्मरहितस्याप्यात्मन. शरीरकरणेच्छोपजायते तदा शरीरमारभते, आत्मन. सकलशक्तिसमन्वितत्वात्, अत एव मुक्तात्मनो न भूय शरीरित्वप्रसङ्ग', शरीरकरणेच्छाया एवाभावात्, तदप्यश्लीलं, शुद्धस्य सतो रागद्वेषरहित; तया शरीरकरणेच्छाया एवाप्रवृत्तेः, मुक्तात्मवत्, ततः कर्म्मसद्वितीय' पुरुष. कर्त्तेति न सर्वाणि वेदपदानि कर्म्मसत्ताप्रतिषेधकानि, न तत् कर्म प्रत्यक्षप्रमाणगोचरातिक्रान्त, मया साक्षात्प्रत्यक्षत उपलभ्यमानत्वात्, नाप्यनुमानगोचरातीतं भवतोऽप्यनुमानसिद्धत्वात्, तच्चेदमनुमानं—शरीरान्तरपूर्वक बालशरीरमिन्द्रियादिमत्त्वात् युवशरीरवत्, न च वाच्यं जन्मान्तरानीतशरीरपूर्वकत्वस्यास्माभिरभ्युपगतत्वात्सिद्धसाध्यता, जन्मान्तरशरीरस्यापान्तरालगतावभावेन तत्पूर्वकत्वायोगात्, तस्मात्कार्म्मणशरीरपूर्वक बालशरीरमिति सिद्ध कर्म्म, अन्यथा प्रतिनियतदेशस्थानगर्भप्राप्तिर्नरपश्वादिरूपेण वैचित्र्यं वा नोपपत्तिमत्, नियामकाभावात्, उक्तं च—"आत्मत्वेनाविशिष्टस्य, वैचित्र्यं तस्य यद्वशात् । नरादिरूप तच्चित्रमदृष्टं कर्म्मसञ्ज्ञकम् ॥ १ ॥" अथ स्वभाव एव नियामको वैचित्र्यस्य न कर्म्मेति कर्म्मासिद्धि', तदप्यनुपपन्नं, विकल्पाभ्यामयोगात्, स हि स्वभावो वस्तुविशेषो वा स्यात् वस्तुधर्म्मो वा ?, न तावत् वस्तुविशेषस्तस्याप्रामाणिकत्वात्, नहि स वस्तुविशेषः प्रत्यक्षप्रमाणसिद्धो नाप्यनुमानसिद्धो न चाप्यागमगम्य इत्यप्रमाणक एव, अन्यच्च—स वस्तुविशेषो मूर्त्तो वा अमूर्त्तो वा ?, यदि मूर्त्त. कर्म्मणोऽस्य न कश्चिद्भेदोऽन्यत्र सञ्ज्ञाभेदात्, भवता हि वस्तुविशेष इति व्यवह्रियते मया तु कर्म्मेति,

अथामूर्त्तो न तर्हि वैचित्र्यहेतुर्देहकारणं च अमूर्त्तत्वात् गगनवत्, अथ वस्तुधर्म्मः स्वभाव इति पक्षस्तत्रापि विकल्पद्वयं, स ह्यात्माख्यवस्तुधर्मो वा स्याद्वस्त्वन्तरधर्मो वा ?, तत्रात्माख्यवस्तुधर्मत्वे देहादिकारणत्वानुपपत्तिरमूर्त्तत्वात् गगनवत्, वस्त्वन्तरधर्मत्वेऽपि विकल्पयुगलप्रवेश, तद्धि वस्त्वन्तरममूर्त्तं वा स्यान्मूर्त्तं वा ?, अमूर्त्तत्वे तद्धर्मोऽप्यमूर्त्त इति पूर्ववत् देहादिकारणत्वायोग., अथ मूर्त्तं तर्हि स मूर्त्तवस्तुधर्म' पुद्गलपर्याय एवान्यस्य मूर्त्तवस्तुधर्मत्वायोगात्, कर्मापि च पुद्गलपर्यायानन्यरूपमिति कर्मसिद्धिः। अन्यच्च–समानेऽपि च सेवाद्यारम्भे समानेऽपि च स्वामिचित्तपरिज्ञानादिरूपे तदुपाये यः खलु परस्परं मनुष्याणा फलभेद स हेत्वन्तर विना न युक्तिमियर्त्ति, कारणभेदमन्तरेण कार्यभेदायोगात्, ततो यदेव तत्र किञ्चनापि हेत्वन्तर तत्कर्मेति प्रतिपत्तव्यम्, उक्तञ्च—"तथा तुल्येऽपि चारम्भे, सदुपायेऽपि यो नृणाम्। फलभेद स युक्तो न, युक्त्या हेत्वन्तर विना ॥ १ ॥ तस्मादवश्यमेष्टव्यमत्र हेत्वन्तर परै। तदेवादृष्टमित्याहुरन्ये शास्त्रकृतश्रमा. ॥ २ ॥ ( शास्त्रवा० ) आगमगम्यं चैतत्, 'पुण्य. पुण्येन कर्मणा, पाप. पापेन कर्म्मणे'ति श्रुतिवचनप्रामाण्यात्, अथ कर्मास्तीति प्रतीम., तच्च कर्म्म पुद्गलस्वरूप नामूर्त्तमिति कथ प्रतिपत्तव्यम् ?, उच्यते, अमूर्त्तत्वे सति तत. सकाशादात्मनामनुग्रहोपघातासम्भवादाकाशादिवत्, न खल्वाकाशमात्मनामनुग्रहमुपघात वा विधातुमलममूर्त्तत्वादेवं कर्म्मापि स्यात्, एतेन यदवोचन् सौगता.–वासना कर्मेति, तदपि प्रतिक्षिप्तम्, वासनाया अमूर्त्तत्वेनोक्तदोषानतिक्रमात्, उक्त च—"अन्ने उ अमुत्तं चिय ( केई अमुत्तमेव उ ) कम्मं भणंति वासणारूव। त च न जुज्जइ तत्तो उवघायाणुग्गहाभावा ॥१॥ नागास उवघाय अणुग्गहं वावि कुणइ सत्ताणमित्यादि" ( धर्म ६२७-८ ) अन्यच्च–

वासना नाम वासकसम्पर्कनिबन्धना यथा तिलादौ गन्धवासना मालतीपुष्पादिसम्पर्कहेतुका, ततो यदि बोधसताने वासना रागादिहेतुरभ्युपगम्यते तर्ह्यवश्य बोधातिरिक्त किञ्चिद्वासकमभ्युपगन्तव्यम्, अन्यथा वासनानुपपत्ते', तथा च सति सिद्ध नः पौद्गलिक कर्म्म, उक्त च—"वासनाऽप्यन्यसम्बन्ध, विना नैवोपपद्यते । पुष्पादिगन्धवैकल्ये, तिलादौ नेष्यते यत ॥ १ ॥ बोधमात्रातिरिक्त तु, वासकं किञ्चिदिष्यताम् । मुख्यं तदेव न. कर्म्म, न युक्ता वासनाऽन्यथा ॥ २ ॥ ( शाश्वता ) ये पुनरपरे प्राहुरात्मशक्तिरूप कर्मेति त एव प्रष्टव्या'—सा शक्तिरात्मन. स्वाभाविकी उतान्यसम्पर्कसमुद्भवा ?, तत्र यद्याद्य. पक्षस्तदा मोक्षाभावप्रसङ्ग , आत्मस्वरूपस्येव तस्या शक्तेरपनेतुमशक्यत्वात्, अन्यथानिरुपाधिकात्मानुपपत्तेः, आत्माख्यवस्तुधर्म्मस्वभावोक्तदोषानुषङ्गस्तु तदवस्थ एव, अथ द्वितीयः पक्षः, तथा च सति यस्योपाधे सम्पर्कवशात् सा शक्तिरात्मनो नारकादिभवभ्रमणरूपा समुदपादि तदेवास्माक पौद्गलिकं कर्मेति न काचित्क्षतिः । यदप्युक्तम् 'अन्यच्चामूर्त्त आत्मा मूर्त्तं च कर्म्मे'त्यादि, तदप्यसम्यक्, अमूर्त्तस्याप्याकाशस्य मूर्तेन घटादिना सह यदिवा द्रव्यस्य पराभिप्रायेणामूर्त्तया क्रियया सह सयोगभावात्, उक्तं च—"मुत्तस्सामुत्तिमया जीवेण कहं हवेज्ज संबधो ? । सोम ! घडस्सव नभसा जह वा द्व्वस्स किरियाए ॥ १ ॥" ( वि १६३५ ) तथा अमूर्त्तस्याप्यात्मनो मूर्त्तकर्म्मकृतावनुग्रहोपघातावविरुद्धौ, विज्ञानस्य ब्राह्म्यौषध्यादिमदिरापानादिभिरनुग्रहोपघातदर्शनात्, आह च—"मुत्तेणामुत्तिमतो उवघायाणुग्गहो कहं होज्जा ? । जह विन्नाणाईण मदिरापाणोसहाईहि ॥ १ ॥" ( वि १६३७ ) एवं भगवताऽभिहितेऽग्निभूतिः किं कृतवानित्याह—

छिन्नंमि संसयंमी जाइजरामरणविप्पमुक्केण । सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ ६०५ ॥

व्याख्या पूर्ववत् ।

द्वितीयो गणधरः समाप्त ॥

---

अथ तृतीयस्य गणधरस्य वायुभूतेर्वक्तव्यतामभिधित्सुराह—

ते पव्वइए सोउं तइओ आगच्छई जिणसगासं । वच्चामि ण वन्दामि वंदित्ता पज्जुवासामि ॥ ६०६ ॥

तौ इन्द्रभूत्यग्निभूती प्रव्रजितौ श्रुत्वा तृतीयो-वायुभूतिनामा द्विजोपाध्यायो जिनसकाशमागच्छति, सातिशयनिज-बन्धुद्वयनिष्क्रमणाकर्णनादपगताभिमानो भगवति सञ्जातसर्वज्ञप्रत्यय सन्नेवमवाधारयत्-व्रजामि ण इति वाक्यालङ्कारे तथा वन्दे भगवन्त वन्दित्वा पर्युपासे इति ॥ अपर च किं विकल्प्य समागतोऽसावित्याह—

सीसत्तेणोवगया संपइ इंदऽग्गिभूइणो जस्स । तिहुअणकयप्पणामो स महाभागोऽभिगमणिज्जो ॥ १३१ भा०॥

तदभिगमवंदणनमसणाइणा हुज्ज पूअपावोऽहं । वुच्छिन्नसंसओ वा वुत्तुं पत्तो जिणसगास ॥ १३२ भा०॥

गाथाद्वयमपि सुगम, पूतपापो-विशुद्धपापोऽपगतपाप इत्यर्थः ॥ तत किमित्याह—

आभट्ठो य जिणेण जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीण ॥ ६०७ ॥

अस्या व्याख्या प्रागिव ॥ इत्थं सगौरवमाभाषितोऽपि भगवता सकलत्रैलोक्यातिशायिनीं तस्य रूपादिसमृद्धिमभिसमीक्ष्य क्षोभादसमर्थो हृद्गत सशयं प्रष्टु विस्मयात्तूष्णीमाश्रित, पुनरप्युक्त , किमित्याह—

तज्जीवतस्सरीरति ससओ नवि अ पुच्छसे किंचि । वेयपयाण य अत्थ न याणसी तेसिमो अत्थो ॥ ६०८ ॥

हे आयुष्मन् !—वायुभूते ! तवाय सशयो, यदुत–स एव जीवस्तदेव च शरीरमिति, नापि च पृच्छसि किञ्चित्
विदिताशेपतत्त्व मल्लक्षण क्षोभात्, अय च सशयस्तव विरुद्धवेदपदश्रुतिनिबन्धन', तेपा च वेदपदानामर्थं न जानासि
तेन सशय कुरुपे, तेपा च तव संशयनिबन्धनाना वेदपदानामयमर्थो–वक्ष्यमाण इति गाथार्थ । तानि चामूनि परस्प-
रविरुद्धानि वेदपदानि—'विज्ञानघन एवैतेभ्यो भूतेभ्य' समुत्थाय पुनस्तान्येवानुविनश्यति, न प्रेत्य संज्ञाऽस्ति' इत्यादि,
तथा—'सत्येन लभ्यस्तपसा ह्येप ब्रह्मचर्येण नित्य ज्योतिर्मयो हि शुद्धो य पश्यन्ति धीरा यतय· सयतात्मान' इत्यादि
च, एतेपा चायमर्थस्तव बुद्धौ प्रतिभासते–न देहात्मनोर्भेदसंज्ञास्ति, विज्ञानघनेत्यादीना व्याख्या पूर्ववत्, नवरं न प्रेत्य
सज्ञाऽस्ति भूतसमुदयमात्रधर्मत्वाच्चैतन्यस्य, तेन चामूनि किल शरीरातिरिक्तात्मोच्छेदपराणि वर्त्तन्ते, 'सत्येन लभ्य-
स्तपसा ह्येप' इत्यादीनि तु देहातिरिक्तात्मप्रतिपादकानि तत· सशय·, युक्ता च भूतसमुदायमात्रधर्म्मता चेतनायाः, तस्या
भूतसमुदायमात्र एवोपलम्भात् गौरतादिवत्,प्रत्यक्षादिप्रमाणगोचरातिक्रान्तश्च देहातिरिक्त आत्मा इति,तत्र वेदपदाना चार्थं
न जानासि, चशब्दात् युक्तिहृदये च, तेपामयमर्थ –तत्र विज्ञानघनेत्यादीना वेदपदानामर्थ प्रागेव व्याख्यात', सत्येन
लभ्य इत्यादीनि तु सुप्रतीतानि भूतातिरिक्तात्मप्रतिपादकानि, तथाहि—सत्येन–सत्यवचनेन तपसा–अनशनादिरूपेण
ब्रह्मचर्येण च स्फुट नित्य–नियमेन ज्योतिर्मयो–ज्ञानमयः शुद्धो भवति, यं तथाभूतमात्मान धीरा·–परमज्ञानकलिता
यतयो–महर्पयः सयतात्मानो–ध्यानैकनिपण्णा· पश्यन्ति, न च चेतनाया भूतसमुदायमात्र एवोपलम्भात् भूतधर्म्मता,

विलक्षणतया तस्या मूर्त्तत्वायोगात्, एतच्च प्रागेव भावितम्, न च तस्मिन् सत्येवोपलम्भस्तद्धर्मत्वानुमानायालं, व्यभिचारदर्शनात्, तथाहि–स्पर्शे सत्येव रूपादय उपलभ्यन्ते, न च तेषा तद्धर्मतेति, तत शरीरातिरिक्तात्माग्यपदार्थधर्मश्चेतनेति स्थित, प्रत्यक्षसिद्धोऽप्येष आत्मा,तद्गुणस्यावग्रहादिज्ञानस्य स्पष्टसवेदनप्रत्यक्षसिद्धत्वात्,अनुमानगम्योऽपि, तच्चेदं–देहेन्द्रियातिरिक्त आत्मा, तद्विगमेऽपि तदुपलब्धार्थानुस्मरणात्, पञ्चवातायनोपलब्धार्थानुस्मर्तृदेवदत्तवत्, इह स्मरणमनुभवपूर्वकतया व्याप्त, व्याप्यव्यापकभावश्चानयो प्रत्यक्षेणैव प्रतिपन्न, तथाहि—योऽर्थोऽनुभूत स स्मर्यते न शेषस्तथा स्वसवेदनप्रत्यक्षेण प्रतीतेः, विपक्षे चातिप्रसङ्गो बाधकं प्रमाणं, अननुभूते हि विषये यदि स्मरण भवेत् ततोऽननुभूतत्वाविशेषात् खरविषाणादेरपि स्मरणप्रसक्तिरित्यतिप्रसङ्ग, विवक्षिते देहे विवक्षितेषु च इन्द्रियेषु सत्सूपलभ्यो योऽर्थ, स भवान्तरे तद्विगमेऽपि जातिस्मरणे स्मर्यते, ततोऽवश्य तस्यार्थस्योपलम्भको देहातिरिक्त आत्मा प्रतिपत्तव्यो, न तन्मात्र, तन्मात्रत्वे तद्विगमे तदुपलब्धार्थानुस्मरणायोगात्, अधिकृतदेहेन्द्रियमात्रेण तस्यानुपलब्धत्वादिति, आगमगम्यता त्वस्य सुप्रसिद्धैव, सत्येन लभ्य इत्यादिवेदप्रमाणाभ्युपगमात्। एव भगवता व्याकृते स कि कृतवान्? इत्याह–

छिन्नमि संसयंमी जाइजरामरणविप्पमुक्केण। सो समणो पव्वइतो पंचहिं सह खंडियसएहिं ॥ ६०९ ॥

अस्या व्याख्या पूर्ववत्। प्रथमगणधरादिदं नानात्वं–तस्य जीवसत्ताया सशय, अस्य तु शरीरातिरिक्ते खल्वात्मनि, न तु तत्सत्तायामिति।

तृतीयो गणधर समाप्त ॥

सम्प्रति चतुर्थस्य गणधरस्य वक्तव्यतामभिधित्सुराह—

ते पव्वइए सोउं विअत्त आगच्छई जिणसगासं। वच्चामि ण वंदामि वदित्ता पज्जुवासामि ॥ ६१० ॥

तान्—इन्द्रभूतिप्रमुखान् प्रव्रजितान् श्रुत्वा व्यक्तो नाम चतुर्थो गणधरो जिनसकाश—भगवत्समीपं आगच्छति,
केनाध्यवसायेनेत्याह—व्रजामि णमिति वाक्यालङ्कारे वन्दे भगवन्त वर्द्धमानस्वामिन, वन्दित्वा च पर्युपास इति ॥ एवं-
भूतेन च सङ्कल्पेन गत्वा भगवन्तं प्रणम्य तत्पादान्तिके भगवत्सम्पदुपलब्ध्या विस्मयोत्फुल्लनयनस्तस्थौ । अत्रान्तरे—

आभट्ठो अ जिणेणं जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीणं ॥ ६११ ॥

अस्या अपि व्याख्या पूर्ववत् ॥ आभाष्य च भगवता किमुक्तोऽयमित्याह—

कि मन्ने पंच भूआ अत्थि नत्थित्ति संसओ तुज्झं। वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ ६१२ ॥

कि पञ्च भूतानि—पृथिव्यादीनि सन्ति कि वा न सन्तीति मन्यसे, व्याख्यान्तर पूर्ववत् । अय च सशयस्तव विरु-
द्धवेदपदश्रुतिनिबन्धनः, तानि चामूनि वेदपदानि, 'स्वप्नोपमं वै सकलमित्येष ब्रह्मविधिरञ्जसा विज्ञेय'इत्यादि, तथा
'द्यावा पृथिवी'इत्यादि, तथा "पृथिवी देवता आपो देवता"इत्यादि, तेषा च वेदपदानामयमर्थ तव प्रतिभासते—स्वप्नो-
पमं—स्वप्नसदृशं वै निपातोऽवधारणे सकलम्—अशेपं जगदित्येष ब्रह्मविधिः—परमार्थप्रकार' अञ्जसा—प्रगुणेन न्यायेन
विज्ञेयो—ज्ञातव्यः, एवमादीनि किल वेदपदानि भूतनिह्नवपराणि, 'द्यावा पृथिवी'त्यादीनि तु सत्ताप्रतिपादकानि, ततः
सशयः, तथा एवं ते चित्तविभ्रमो यथा भूताभाव एव समीचीनस्तेषा प्रमाणेनाग्रहणात्, तथाहि—चक्षुरादिवि-

विलक्षणतया तस्या मूर्त्तत्वायोगात्, एतच्च प्रागेव भावितम्, न च तस्मिन् सत्येवोपलम्भस्तद्धर्मत्वानुमानायालं, व्यभि-
चारदर्शनात्, तथाहि-स्पर्शे सत्येव रूपादय उपलभ्यन्ते, न च तेपा तद्धर्मतेति, तत शरीरातिरिक्तात्माख्यपदार्थ-
धर्मश्चेतनेति स्थित, प्रत्यक्षसिद्धोऽप्येप आत्मा, तद्गुणस्यावग्रहादिज्ञानस्य स्वसंवेदनप्रत्यक्षसिद्धत्वात्, अनुमानगम्योऽपि,
तच्चेद-देहेन्द्रियातिरिक्त आत्मा, तद्विगमेऽपि तदुपलब्धार्थानुस्मरणात्, पञ्चवातायनोपलब्धार्थानुस्मर्तृदेवदत्तवत्, इह
स्मरणमनुभवपूर्वकतया व्याप्त, व्याप्यव्यापकभावश्चानयो' प्रत्यक्षेणैव प्रतिपन्न', तथाहि—योऽर्थोऽनुभूत. स स्मर्यते न
शेपस्तथा स्वसंवेदनप्रत्यक्षेण प्रतीते', विपक्षे चातिप्रसङ्गो बाधकं प्रमाणं, अननुभूते हि विपये यदि स्मरण भवेत् ततो-
ऽननुभूतत्वाविशेपात् खरविपाणादेरपि स्मरणप्रसक्तिरित्यतिप्रसङ्ग', विवक्षिते देहे विवक्षितेपु च इन्द्रियेपु सत्सूपलभ्यो
योऽर्थः स भवान्तरे तद्विगमेऽपि जातिस्मरणे स्मर्यते, ततोऽवश्यं तस्यार्थस्योपलम्भको देहातिरिक्त आत्मा प्रतिपत्तव्यो,
न तन्मात्र, तन्मात्रत्वे तद्विगमे तदुपलब्धार्थानुस्मरणायोगात्, अधिकृतदेहेन्द्रियमात्रेण तस्यानुपलब्धत्वादिति, आग-
मगम्यता त्वस्य सुप्रसिद्धैव, सत्येन लभ्य इत्यादिवेदप्रमाणाभ्युपगमात्। एव भगवता व्याकृते स किं कृतवान्? इत्याह—

छिन्नंमि संसयमी जाइजरामरणविप्पमुक्केण। सो समणो पव्वइतो पचहिं सह खंडियसएहिं ॥ ६०९ ॥

अस्या व्याख्या पूर्ववत्। प्रथमगणधरादिद नानात्वं—तस्य जीवसत्ताया सशय., अस्य तु शरीरातिरिक्ते खल्वात्मनि,
न तु तत्सत्तायामिति।

तृतीयो गणधर समाप्त ॥

सम्प्रति चतुर्थस्य गणधरस्य वक्तव्यतामभिधित्सुराह—

ते पव्वइए सोउं विअत्त आगच्छई जिणसगासं । वच्चामि ण वंदामि वंदित्ता पज्जुवासामि ॥ ६१० ॥

तान्—इन्द्रभूतिप्रमुखान् प्रव्रजितान् श्रुत्वा व्यक्तो नाम चतुर्थो गणधरो जिनसकाशं—भगवत्समीप आगच्छति,
केनाध्यवसायेनेत्याह—व्रजामि णमिति वाक्यालङ्कारे वन्दे भगवन्त वर्द्धमानस्वामिन, वन्दित्वा च पर्युपास इति ॥ एवं-
भूतेन च सङ्कल्पेन गत्वा भगवन्तं प्रणम्य तत्पादान्तिके भगवत्सम्पदुपलब्ध्या विस्मयोत्फुल्लनयनस्तस्थौ । अत्रान्तरे—

आभट्ठो अ जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीणं ॥ ६११ ॥

अस्या अपि व्याख्या पूर्ववत् ॥ आभाष्य च भगवता किमुक्तोऽयमित्याह—

कि मन्ने पंच भूआ अत्थि नत्थित्ति ससओ तुज्झं । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ ६१२ ॥

कि पञ्च भूतानि—पृथिव्यादीनि सन्ति कि वा न सन्तीति मन्यसे, व्याख्यान्तर पूर्ववत् । अय च सशयस्तव विरु-
द्धवेदपदश्रुतिनिबन्धनः, तानि चामूनि वेदपदानि, 'स्वप्नोपमं वै सकलमित्येष ब्रह्मविधिरञ्जसा विज्ञेय'इत्यादि, तथा
'द्यावा पृथिवी'इत्यादि, तथा "पृथिवी देवता आपो देवता"इत्यादि, तेषा च वेदपदानामयमर्थ तव प्रतिभासते—स्वप्नो-
पमं—स्वप्नसदृशं वै निपातोऽवधारणे सकलम्—अशेषं जगदित्येष ब्रह्मविधिः—परमार्थप्रकार. अञ्जसा—प्रगुणेन न्यायेन
विज्ञेयो—ज्ञातव्यः, एवमादीनि किल वेदपदानि भूतनिह्नवपराणि, 'द्यावा पृथिवी'त्यादीनि तु सत्ताप्रतिपादकानि, ततः
सशयः, तथा एवं ते चित्तविभ्रमो यथा भूताभाव एव समीचीनस्तेषा प्रमाणेनाग्रहणात्, तथाहि—चक्षुरादिनि-

विलक्षणतया तस्या मूर्त्तत्वायोगात्, एतच्च प्रागेव भावितम्, न च तस्मिन् सत्येनोपलम्भस्तद्धर्मत्वानुमानायालं, व्यभिचारदर्शनात्, तथाहि–स्पर्शे सत्येन रूपादय उपलभ्यन्ते, न च तेषा तद्धर्मतेति, तत शरीरातिरिक्तात्मा यपदार्थधर्मश्चेतनेति स्थित, प्रत्यक्षसिद्धोऽप्येष आत्मा, तद्गुणस्यावग्रहादिज्ञानस्य स्पष्टसंवेदनप्रत्यक्षसिद्धत्वात्, अनुमानगम्योऽपि, तथेद–देहेन्द्रियातिरिक्त आत्मा, तद्विगमेऽपि तदुपलब्धार्थानुस्मरणात्, पञ्चवातायनोपलब्धार्थानुस्मर्तृदेवदत्तवत्, इह स्मरणमनुभवपूर्वकतया व्याप्त, व्याप्यव्यापकभावश्चानयो· प्रत्यक्षेणैव प्रतिपन्नः, तथाहि—योऽर्थोऽनुभूत· स स्मर्यते न शेषस्तथा स्वसंवेदनप्रत्यक्षेण प्रतीते·, विपक्षे चातिप्रसङ्गो बाधकं प्रमाणं, अननुभूते हि विषये यदि स्मरण भवेत् ततोऽननुभूतत्वाविशेषात् खरविषाणादेरपि स्मरणप्रसक्तिरित्यतिप्रसङ्गः, विवक्षिते देहे विवक्षितेषु च इन्द्रियेषु सत्सूपलभ्यो योऽर्थ· स भवान्तरे तद्विगमेऽपि जातिस्मरणे स्मर्यते, ततोऽवश्य तस्यार्थस्योपलम्भको देहातिरिक्त आत्मा प्रतिपत्तव्यो, न तन्मात्र, तन्मात्रत्वे तद्विगमे तदुपलब्धार्थानुस्मरणायोगात्, अधिकृतदेहेन्द्रियमात्रेण तस्यानुपलब्धत्वादिति, आगमगम्यता त्वस्य सुप्रसिद्धैव, सत्येन लभ्य इत्यादिवेदप्रमाणाभ्युपगमात्। एव भगवता व्याकृते स किं कृतवान्? इत्याह–

छिन्नंमि संसयंमी जाइजरामरणविप्पमुक्केण। सो समणो पव्वइतो पंचहिं सह खंडियसएहिं ॥ ६०९ ॥

अस्या व्याख्या पूर्ववत्। प्रथमगणधरादिदं नानात्वं–तस्य जीवसत्ताया सशय, अस्य तु शरीरातिरिक्ते खल्वात्मनि, न तु तत्सत्तायामिति।

तृतीयो गणधर समाप्त· ॥

समवायस्यैवासिद्धत्वात्, न खलु वस्तुद्वयापान्तरालवर्ती तत्सम्बन्धनिबन्धनभूतो जतुकल्प क्वचित्समवायो नाम पदार्थ प्रत्यक्षादिप्रमाणविषयोऽस्ति तत' कथ तमस्तित्वेन मन्यामहे?, अन्यच्च—सोऽपि समवाय स्वसमवायिषु कथ वर्त्तेत इति वाच्य, तदन्यसमवायवलादिति चेत्, ननु तत्रापि स एव प्रसङ्ग इत्यनवस्थानुपक्ति, अथ स्वपरोभयसम्बन्धस्वभाव समवायो यथा स्वपरप्रकाशधर्मा प्रदीप, तेनात्मानं स्वसमवायिभि सह सम्बन्धयति स्वसमवायिनश्च परस्परमिति, तदप्यमनोरम, विकल्पयुगलानतिक्रमात्, तथाहि—तौ हि स्वभावौ समवायाद्भिन्नौ वा स्यात् अभिन्नौ वा?, यद्याद्य पक्षस्ततो न समवायस्य तौ, सम्बन्धाभावात्, वस्त्वन्तरधर्मवत्, अथाभिन्नौ तत' समवाय एव तौ, तदव्यतिरिक्तत्वात् तत्स्वरूपवत्, कुत' स्वभावद्वयकल्पनेति भूतविषयप्रमाणाभाव', एव विभ्रमे स्फुटीकृते भगवानुत्तरमाह—वेदपदानामर्थं न जानासि, चशब्दात् युक्ति भावार्थं च, तत्र तव सशयनिबन्धनाना वेदपदानामयमर्थः—स्वप्नोपम वै सकलमित्यादीनि अध्यात्मचिन्ताया मणिकनकाङ्गनादिसयोगस्य अनियतत्वात् अस्थिरत्वात् विपाककटुकत्वात् आस्थानिवृत्तिपराणि, न तु तदत्यन्ताभावप्रतिपादकानि, द्यावा पृथिवीत्यादीनि तु भूतसत्ताप्रतिपादकानि भवतोऽपि प्रतीतानि, ततो वेदसिद्धा सिद्धा भूताना सत्ता, यदप्युक्त—भूताभाव एव समीचीनस्तेषा प्रमाणेनाग्रहणादित्यादि तदप्यसम्यक्, भूतानां प्रत्यक्षादिप्रमाणसिद्धत्वात्, तथाहि—द्विविध परमाणूना रूपं—साधारणमसाधारण च, तन यदसाधारण रूप तेन चाक्षुषविज्ञाने न ते प्रतिभासन्ते, साधारणेन तु रूपेण प्रतिभासन्त एव, न च वाच्यं—साधारणं रूपं नास्त्येव, तदभावे खल्वेकपरमाणुव्यतिरेकेणान्येषामपरमाणुत्वप्रसङ्गात्, परमाणुत्वेनापि तुल्यरूपत्वाभावाद्, अन्यथाऽसदभ्युपगमप्रसक्तेः, अथ यदेतत्परमा-

ज्ञानस्यालम्बनं परमाणवो वा स्यु॰ परमाणुसमूहो वाऽवयवी वा ?, तत्र न तावत्परमाणवस्तेषामिन्द्रियविज्ञाने प्रतिभा-
साभावात्, न खलु चाक्षुषे विज्ञाने परस्परविशकलिताः परमाणव प्रतिभासन्ते, नापि समूह॰, समूहो हि नाम द्वित्रा-
दिपरमाणूना सयोग॰, स चानुपपन्न एव, विकल्पद्वयानतिक्रमात्, तथाहि—परमाणूना सयोगो देशतो वा स्यात्
सर्वात्मना वा ?, तत्र न तावद्देशेन, परमाणोर्देशाभावाद्, अन्यथा परमाणुत्वक्षते , परमोऽणु परमाणुरिति व्युत्पत्तेः,
अथ सर्वात्मना पक्षस्तर्हि परमाणो परमाणौ प्रवेशादणुमात्रप्रसक्ति , तथा च पठन्ति—"सजोगोऽवि य तेसिं देसेण सयहा
व होज्जा हि। देसेण कहमणुत्त ? अणुमेत्त सवहा भवणे ॥ १ ॥ (धर्म ६५१) अथ ब्रूषे-परस्परं प्रत्यासन्नत्वमात्रमेवात्र सयोग-
समूहो, न देशेन सर्वात्मना वा, ततो न कश्चिद्दोष॰, तदप्यसम्यक्, प्रत्येकमिव समुदितानामपि तेषामग्रहणमसङ्गात्,
स्वस्वरूपावस्थिताना तेषामिन्द्रियगम्यत्वाभावात्, न च परस्परप्रत्यासन्नत्वमभ्युपपन्न, तद्ध्यवश्यं षड्दिग्भेदतो भवति,
दिग्भेदे च देशसम्भवादणुत्वव्याघात , आह च—हाणी य अणुत्तस्सा दिसिभेदातो न अन्नहा घडइ। तेसि मिहो पच्चा-
सघयत्ति परिफग्गुमेयंपि ॥ १ ॥ (धर्म० ६५३) अथावयवीति पक्ष सोऽप्ययुक्त , अवयविन एवासम्भवात्, तस्यावयवेषु
वृत्त्ययोगात्, तथाहि-सोऽवयवी देशेन वा प्रत्येकमवयवेषु वर्त्तते सर्वात्मना वा ?, तत्र न तावद्देशेन अवयविनो देशाभावात्,
अन्यथा तेष्वपि देशेषु देशेन वर्त्तेत, तत्रापि स एव प्रसङ्ग इत्यनवस्था, अथ सर्वात्मना तर्हि यावन्तोऽवयवास्तावन्तोऽवयविन
इत्यवयविबहुत्वप्रसङ्ग , अथ न ब्रूमो देशेन वर्त्तते सर्वात्मना वा, किन्तु वर्त्तते इत्येव, तत उक्तदोषाप्रसङ्ग , तदप्यश्लीलम्,
उक्तरूपप्रकारद्वयव्यतिरेकेणान्यस्य वृत्तिप्रकारस्यासम्भवात्, अथ समवायलक्षणेन सम्बन्धेन वर्त्तते इति मन्येथास्तदप्ययुक्त,

यत् प्रत्यासन्नत्व तदेव परमाणुसमूह, एप एव च देशत परमाणूना सम्बन्ध', तथा चार्षम्—"जं चेव खलु अणूण पच्चासन्नत्तणं मिहो एत्थ। तं चेव उ सवधो विसिट्ठपरिणामसावेक्ख ॥ १ ॥ देसेण उ सवधो इह देसे सति कहमणुत्तपि ?। अप्पतराभावातो न अप्पतरय ततो अत्थि ॥ २ ॥ ( धर्म ७१०–७११ ) अथ दिग्भेदतो यो भेद स एवान्यदल्पतरमस्तीति कथं न परमाणुत्वव्याघात.?, तदपि अयुक्तम्, सम्यक् तत्त्वापरिज्ञानात्, परमोऽणुर्हि स उच्यते यो द्रव्यतोऽशक्यभेदो, न च विवक्षितस्य परमाणोर्द्रव्येण शस्त्रादिना भेद आपादयितुं शक्यते, तथा चोक्तम्—"सत्थेण सुतिक्खेणवि छेत्तुं भेत्तु व जं किर न सक्का। त परमाणु सिद्धा वयति आइ पमाणाणं ॥ १ ॥ ( अनु–१००* ) ततोऽन्यस्य पृथग्द्रव्यरूपस्याल्पतरस्याभावादव्याहतं षड्दिग्भेदेऽपि परमाणुत्वं, उक्त च—"दिसिभेदातोच्चिय सक्कभेयतो कह न अप्पतरगति ?। दव्वेण सक्कभेयं विवक्खियं ता कुतो तमिह ? ॥ १ ॥ ( धर्म ७१३ ) योऽपि सर्वात्मपक्षे दोप उक्त' यथा—परमाणुत्वमात्रप्रसङ्ग इति सोऽप्ययुक्तो, यतो न परमाणो· परमाणुर्विनाशक', सतः सर्वथा विनाशायोगात्, ततो द्वावपि परमाणू तथाविधपरमाणुविशेपत. सर्वात्मना सम्बन्धमापद्यमानौ सत्तोपचयविशेपात् स्थूलव्यणुकरूपतामेव प्राप्नुतो न परमाणुत्वमात्रमित्यदोष', उक्त च—"न य जुत्तं अणुमेत्त सत्तातो सव्वहावि सजोगे। बायरमुत्तत्ता णासभावतो उवचयविसेसा ॥ १ ॥" ( धर्म ७१७ ) अवयविपक्षोक्तं दूपणमनवकाशं, पृथग्द्रव्यान्तररूपस्यावयविनोऽस्माभिरनभ्युपगमात्, य एव हि परमाणूना तथाविधदेशकालादिसामग्रीविशेपसापेक्षाणा विवक्षितजलधारणादिक्रियासमर्थः समानः परिणामविशेपः सोऽवयवी, ततः कुतो देशकार्त्स्न्यवृत्तिविकल्पदोपावकाशः ?, शेपं तु समवायपक्षोक्तमनभ्युपगमात् न

णुत्वेन तुल्यरूपत्वं तत्तदन्यव्यावृत्तिमात्रपरिकल्पितसत्ताकं, यथाऽयमपि परमाणु॰ परमाणोर्व्यावृत्तोऽयमप्यपरपरमाणो॰ र्व्यावृत्त इति, नतु परमार्थिक, तदेतदयुक्त, स्वतस्तुल्यरूपत्वाभावेन तदन्यव्यावृत्तेरपि साधारणाया असम्भवात्, न खलु यथा घटस्याघटाद् व्यावृत्तिस्तथा पटस्यापि, घटेन सह पटस्य तुल्यरूपत्वाभावात्, अथ सर्वं स्वलक्षणं सकलसजातीयविजातीयव्यावृत्तिस्वभाव, तत समानरूपत्वाभावेऽपि विजातीयव्यावृत्तिः समाना, तदपि न युक्तिक्षमं, विजातीयेभ्यो व्यावृत्तौ परमाणुत्वस्येव सजातीयेभ्यो व्यावृत्तावपरमाणुत्वस्य प्रसङ्गात्, न्यायस्य समानत्वाद्, न च भवन्मते सजातीयव्यावृत्तिर्युक्ता, सामान्यस्यैवानभ्युपगमात्, न च सजातीयत्वाभावेऽपि विजातीयव्यावृत्ततापि वस्तुन उपपद्यते, अनेकस्वभावानभ्युपगमात्, न चैकेन स्वभावेन सर्वेभ्यो व्यावृत्ति॰, तेषा सर्वेषामपि व्यावृत्तिविषयाणामेकरूपताप्रसक्ते॰, तथाहि—घटाद् व्यावर्त्तते पटो, घटव्यावृत्तिस्वभावतयैव व्यावर्त्तते तर्हि बलात् स्तम्भस्य घटरूपतानुपक्ति, अन्यथा ततस्तत्स्वभावतया व्यावृत्त्ययोगात्, तस्मादवश्य परमाणूना द्वे रूपे प्रतिपत्तव्ये तुल्यमतुल्यं च, तत्र तुल्यरूपेण चाक्षुषे विज्ञाने समुदिता॰ परमाणव प्रतिभासन्ते इति भूताना प्रत्यक्षविषयता । यदपि समूहपक्षेऽभिहित 'परमाणूना सयोगो देशतो वा स्यात्सर्वात्मना वा' इत्यादि, तत्र पक्षद्वयेऽप्यदोषः, परमाणूना विचित्रपरिणमनशक्तिसमन्विततया कदाचिद्देशत कदाचित्सर्वात्मना सम्बन्धभावात्, न च वाच्यं देशाभ्युपगमे परमाणोः अपरमाणुत्वप्रसङ्ग, परमाणुर्हि स उच्यते यतो नान्यदल्पतर, परमोऽणु॰ परमाणुरिति व्युत्पत्ते॰, न च विवक्षितात्परमाणोरन्यदल्पतरमस्ति तत॰ परमाणुत्वाव्याघातः, तथा च सति देशकालादिसामग्रीविशेषसम्पादितपरिणामविशेषपरिकल्पिताना परमाणूना परस्पर

यत् प्रत्यासन्नत्व तदेव परमाणुसमूह , एप एव च देशत॰ परमाणूना सम्बन्ध॰, तथा चार्पम्—"जं चेव खलु अणूणं
पच्चासन्नत्तणं मिहो एत्थ । त चेव उ सवधो विसिट्ठपरिणामसावेक्ख ॥ १ ॥ देसेण उ संवधो इह देसे सति कहमणुत्तपि ? ।
अप्पतराभावातो न अप्पतरय ततो अत्थि ॥ २ ॥ ( धर्म ७१०–७११ ) अथ दिग्भेदतो यो भेद स एवान्यदल्प-
तरमस्तीति कथं न परमाणुत्वव्याघात ?, तदपि अयुक्तम् , सम्यक् तत्त्वापरिज्ञानात् , परमोऽणुर्हि स उच्यते यो द्रव्यतो-
ऽशक्यभेदो, न च विवक्षितस्य परमाणोर्द्रव्येण शस्त्रादिना भेद आपादयितु शक्यते, तथा चोक्तम्—"सत्थेण सुति-
क्खेणवि छेत्तुं भेत्तु व जं किर न सक्का । त परमाणु सिद्धा वयंति आइ पमाणाणं ॥ १ ॥ ( अनु–१००* ) ततोऽन्यस्य
पृथग्द्रव्यरूपस्याल्पतरस्याभावादव्याहत षड्दिग्भेदेऽपि परमाणुत्वं, उक्त च—"दिसिभेदातोच्चिय सक्कभेयतो कह न अप्प-
तरगति ?। दवेण सक्कभेयं विवक्खिय ता कुतो तमिह ? ॥ १ ॥ ( धर्म ७१३ ) योऽपि सर्वात्मपक्षे दोप उक्त यथा—
परमाणुत्वमात्रप्रसङ्ग इति सोऽप्ययुक्तो, यतो न परमाणो परमाणुर्विनाशक॰, सतः सर्वथा विनाशायोगात् , ततो
द्वावपि परमाणू तथाविधपरमाणुविशेपत सर्वात्मना सम्बन्धमापद्यमानौ सत्तोपचयविशेपात् स्थूलद्व्यणुकरूपतामेव
प्राप्नुतो न परमाणुत्वमात्रमित्यदोपः, उक्त च—"न य जुत्तं अणुमेत्तं सत्तातो सवहावि सजोगे । बायरमुत्तसा णासभावतो
उवचयविसेसा ॥ १ ॥" ( धर्म ७१७ ) अवयविपक्षोक्तं दूपणमनवकाशं, पृथग्द्रव्यान्तररूपस्यावयविनोऽस्माभिरनभ्युपग-
मात् , य एव हि परमाणूना तथाविधदेशकालादिसामग्रीविशेपसापेक्षाणा विवक्षितजलधारणादिक्रियासमर्थः समान
परिणामविशेपः सोऽवयवी, ततः कुतो देशकात्स्न्र्यवृत्तिविकल्पदोपावकाशः ?, शेपं तु समवायपक्षोक्तमनभ्युपगमात् न

न॰ क्षितिमावहति । एवं भगवताऽभिहिते स किं कृतवानित्याह—

छिन्नंमि ससयंमी जाइजरामरणविप्पमुक्केण । सो समणो पव्वइओ पचहि सह खंडियसएहिं ॥ ६१३ ॥

अस्या व्याख्या पूर्ववत् ।

चतुर्थो गणधर समाप्त ॥

पञ्चमगणधरवक्तव्यतामाह—

ते पव्वइए सोउ सुहम्म आगच्छई जिणसगास । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६१४ ॥

तान्—इन्द्रभूतिप्रमुखान् प्रव्रजितान् श्रुत्वा सुधर्मः पञ्चमो गणधरो जिनसकाशं—भगवत्समीपमागच्छति, किंभूतेनाध्यवसायेनेत्याह, पश्चार्द्धं पूर्ववत् ॥ स च भगवन्त दृष्ट्वाऽतीव मुमुदे, अत्रान्तरे—

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केण । नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीण ॥ ६१५ ॥

अस्या व्याख्या पूर्ववत् ।

किं मन्ने जारिसो इह भवमि सो तारिसो परभवेऽवि । वेयपयाण य अत्थ न याणसी तेसिमो अत्थो॥६१६॥

किं मन्यसे यो मनुष्यादिर्यादृश इह भवे स परभवेऽपि तादृश एव, नन्वयमनुचितस्तव संशयो, यतोऽसौ विरुद्धवेदपदश्रुतिनिवन्धन ,तानि चामूनि पदानि—'पुरुषो वै पुरुषत्वमश्नुते पशव॰ पशुत्व'मित्यादि, तथा 'शृगालो वै एष जायते यः सपुरीषो दह्यते'इत्यादि च, तत्र वेदपदाना त्वमित्थमर्थमवबुद्ध्यसे—पुरुषो मृत॰ सन् पुरुषत्वमश्नुते—प्राप्नोति, पशवो—गवादय॰ पशुत्वमेव, अमूनि वेदपदानि किल भवान्तरसादृश्यप्रतिपादकानि, तथा शृगालो वै एष इत्यादीनि तु वैस-

दृश्यप्रापकानि तत संशय, अन्यच्च—यत्तेऽभिप्रायो यथा कारणानुरूप कार्यं भवति, न खलु शालिबीजात् गोधूमा-
ङ्कुरप्रसूति, ततो भवान्तरसादृश्यमेवोपपत्तिमत्, तत्र वेदपदानामर्थं चशब्दात् युक्तिं भावार्थं च न जानासि, तेषा
वेदपदानामयमर्थ'–पुरुष खल्विह जन्मनि स्वभावेन मार्दवार्ज्जवादिगुणयुक्तो मनुष्यनामगोत्रकर्मणी बद्धा मृत· सन् पुरु-
पत्वमश्नुते, न तु नियमत, एव पशवोऽपि मशुभावमायादिगुणयुक्ता पशुनामगोत्रे कर्मणी बद्धा मृता· सन्त· पशु-
त्वमासादयन्ति, न तु नियोगत', जीवाना गतिविशेषस्य कर्मसापेक्षत्वात्, शेषाणि तु वेदपदानि सुगमानि, न च नियत
मत कारणानुरूपं कार्यं, वैसदृश्यस्यापि दर्शनात्, तथाहि—श्रृङ्गाच्छरो जायते, तस्मादेव सर्षपानुलिप्तात्तु तृणानीति,
गोलोमाविलोमभ्या दूर्वा, ततो न नियम·, अथवा कारणानुरूपकार्यपक्षेऽपि भवान्तरवैचित्र्यमस्य युक्तमेव, यतो
भवाङ्कुरबीजं सात्मक कर्म्म, तच्च तिर्यग्नरामरनारकायुष्कादिभेदभिन्नत्वात् चित्रम्, अतः कारणवैचित्र्यात् कार्यवै-
चित्र्यमिति, वस्तुस्थित्या तु सौम्य ! किञ्चिदिह लोके परलोके वा न सर्वथा समानमसमानं वाऽस्ति, तथा चेह भवे युवा
निजैरप्यतीतानागतैर्बालवृद्धादिपर्यायै सर्वथा न समानोऽवस्थाभेदग्रहणात्, नापि सर्वथाऽसमानः सत्ताद्यनुगमात्,
एव परलोकेऽपि मनुजो देवत्वमापन्नो न सर्वथा समान', शरीरान्तरादिभावात्, नापि सर्वथाऽसमानो जीवत्वाद्यन्व-
यात्, इत्थ चैतदङ्गीकर्त्तव्यमन्यथा दानदमदयादीना वैयर्थ्यप्रसङ्गात्। एव भगवताऽभिहिते स किं कृतवानित्याह—

छिन्नभि ससयंमी जाइजरामरणविप्पमुक्केण। सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ ६१६ ॥

व्याख्या पूर्ववत् ॥

॥ पञ्चमो गणधर· समाप्त ॥

न क्षितिमावहति । एवं भगवताऽभिहिते स किं कृतवानित्याह—

छिन्नमि ससयंमी जाइजरामरणविप्पमुक्केणं । सो समणो पव्वइओ पंचहिं सह खंडियसएहिं ॥ ६१३ ॥

अस्या व्याख्या पूर्ववत् । चतुर्थो गणधर समाप्त ॥

पञ्चमगणधरवक्तव्यतामाह—

ते पव्वइए सोउ सुहम्म आगच्छई जिणसगास । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६१४ ॥

तान्—इन्द्रभूतिप्रमुखान् प्रव्रजितान् श्रुत्वा सुधर्मः पञ्चमो गणधरो जिनसकाशं—भगवत्समीपमागच्छति, किंभूतेनाध्यवसायेनेत्याह, पश्चार्द्धं पूर्ववत् ॥ स च भगवन्त दृष्ट्वाऽतीव मुमुदे, अत्रान्तरे—

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केण । नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीण ॥ ६१५ ॥

अस्या व्याख्या पूर्ववत् ।

किं मन्ने जारिसो इह भवमि सो तारिसो परभवेऽवि । वेयपयाण य अत्थ न याणसी तेसिमो अत्थो॥६१६॥

किं मन्यसे यो मनुष्यादिर्यादृश इह भवे स परभवेऽपि तादृश एव, नन्वयमनुचितस्तव संशयो, यतोऽसौ विरुद्धवेदपदश्रुतिनिबन्धनः, तानि चामूनि पदानि—'पुरुषो वै पुरुषत्वमश्नुते पशवः पशुत्व'मित्यादि, तथा 'शृगालो वै एष जायते यः सपुरीषो दह्यते'इत्यादि च, तत्र वेदपदाना त्वमित्थमर्थमवबुद्ध्यसे—पुरुषो मृत सन् पुरुषत्वमश्नुते-प्राप्नोति, पशवो—गवादयः पशुत्वमेव, अमूनि वेदपदानि किल भवान्तरसादृश्यप्रतिपादकानि, तथा शृगालो वै एष इत्यादीनि तु वैस-

वा एप बाह्यम्—आत्मव्यतिरिक्त महदहङ्कारादि आभ्यन्तर वा—स्वरूपमेव वेद—जानाति, प्रकृतिधर्म्मत्वात् ज्ञानस्य, प्रकृतेश्चाचेतनत्वादिति वन्धमोक्षानुपपत्तिरिति भाव, तदेवममूनि किल वन्धमोक्षाभावप्रतिपादकानि, तथा नह वै, सशरीरस्य—वाह्याध्यात्मिकानादिशरीरसन्तानयुक्तस्य प्रियाप्रिययो.—सुखदु.खयोरपहति.—विनाशोऽस्ति, ससा नैवेत्यर्थ, अशरीर—शरीररहित सन्त, वावशब्दो निपातो वाशब्दार्थ, अशरीरी वा सन्त प्रिया-रिणः सुखदु खाभावो नास्तीत्यर्थ, अशरीर—शरीररहित सन्त, वावशब्दो निपातो वाशब्दार्थ, अशरीरी वा सन्त प्रिया-प्रिये न स्पृशतः, न सुखदु'खे अनुपजतः कारणाभावात्, अमूनि किल वाक्यानि मोक्षाभिधायकानि, तत सशय, अन्य-च्च—अयं सौम्य ! तवाभिप्राय —वन्धो हि जीवकर्म्मसयोगलक्षण, स आदिमान् आदिरहितो वा ?, तत्र यदि प्रथमो विकल्प-स्ततो विकल्पत्रयप्रसङ्गः, किं पूर्वमात्मन. प्रसूति' पश्चात्कर्मण यदिवा पूर्वं कर्मणः पश्चादात्मनः आहोश्चित् युगपदुभ-यस्येति, किञ्चातः ?, सर्वत्रापि दोप., तथाहि—न तावदात्मन. पूर्व प्रसूतिर्निर्हेतुकत्वात्, व्योमकुसुमवत्, नापि कर्मण प्राक्प्रसूति' कर्त्तुरभावात्, न चाकृत कर्म्म भवति, युगपत्प्रसूतिरप्ययुक्ता, कारणाभावात्, न च अनादिमत्यप्यात्मनि वन्धो घटामटाट्यते, कारणाभावात्, गगनस्येव, इत्थं चैतदङ्गीकर्त्तव्यमन्यथा मुक्तस्यापि वन्धप्रसङ्गो विशेषाभावात्, अथ द्वितीय' पक्षस्तर्हि नात्मकर्म्मवियोगो भवेद् अनादित्वाद् आकाशसंयोगवदिति मोक्षानुपपत्तिरिति, तत्र वेदपदानामयमर्थ.—स एप.—मुक्तात्मा विगता. छाद्मस्थिकज्ञानादयो गुणा यस्य स विगुण. विभु.—ज्ञानात्मना सर्वगत., केवलज्ञानस्य सकललोकावभासित्वात्, तथा न वध्यते, मिथ्यादर्शनादि-वन्धकारणाभावात्, ससरति वा मनुष्यादिभवेषु, नेत्यनुवर्त्तते, कर्मवीजाभावात्, नापि मुच्यते, मुक्तत्वात्, न मोचयति

अधुना षष्ठगणधरवक्तव्यतामाह—

ते पव्वइए सोउं मंडित आगच्छई जिणसगासे। वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६१८ ॥

तान्–इन्द्रभूतिप्रमुखान् प्रव्रजितान् श्रुत्वा मण्डिकः षष्ठो गणधरो जिनसकाश–भगवत्समीपमागच्छति, किंभूतेना-ध्यवसायेनेत्याह—वच्चामि णेत्यादि पश्चार्द्धं पूर्ववत् ॥ स च भगवत्समीप गत्वा भुवननाथ प्रणम्य प्रमुदितस्तदग्रत-स्तस्थौ, अत्रान्तरे—

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य सव्वण्णूसव्वदरिसीण ॥ ६१९ ॥

व्याख्या पूर्ववत् ॥

किं मन्ने बंधमोक्खो अत्थी नत्थित्ति संसओ तुज्झ। वेयपयाण य अत्थ न याणसी तेसिमो अत्थो ॥६२०॥

किं मन्यसे बन्धमोक्षौ स्तो न वा स्त इति, नन्वयमनुचितः तव संशयः, व्याख्यान्तर पूर्ववत्, यतोऽयं तव संशयो विरुद्धवेदपदश्रुतिसमुत्थो वर्त्तते, तानि च वेदपदान्यमूनि—"स एष विगुणो विभु न बध्यते संसरति वा न मुच्यते मोचयति वा, न वा एष बाह्यमाभ्यतर वा वेद" इत्यादीनि "न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीर वा व-सन्त प्रियाप्रिये न स्पृशत" इत्यादीनि च, एतेषा च वेदपदानामयमर्थस्तव चेतसि प्रतिभासते–स एष'–अधिकृतो जीवो विगुणः–सत्त्वादिगुणरहितो विभु–सर्वगतः न बध्यते, पुण्यपापाभ्या न युज्यते इत्यर्थः, संसरति वा, नेत्यनुवर्त्तते, न मुच्यते–न कर्म्मणा वियुज्यते, बन्धाभावात्, नाप्यन्य मोचयति, क्रियारहितत्वात्, अनेनाकर्तृत्वमावेदयति, न

वा एप वाह्यम्–आत्मव्यतिरिक्त महदहङ्कारादि आभ्यन्तर वा–स्वरूपमेव वेद–जानाति, प्रकृतिधर्म्मत्वात् ज्ञानस्य,
प्रकृतेश्चाचेतनत्वादिति वन्धमोक्षानुपपत्तिरिति भाव, तदेवममूनि किल वन्धमोक्षाभावप्रतिपादकानि, तथा नह वै,
नैवेत्यर्थ, सशरीरस्य–वाह्याध्यात्मिकानादिशरीरसन्तानयुक्तस्य प्रियाप्रिययो.–सुखदु खयोरपहति'–विनाशोऽस्ति, ससा-
रिण' सुखदु खाभावो नास्तीत्यर्थ, अशरीर–शरीररहित सन्त, वावशब्दो निपातो वाशब्दार्थ, अशरीरी वा सन्त प्रिया-
प्रिये न स्पृशतः, न सुखदु'खे अनुपजतः कारणाभावात्, अमूनि किल वाक्यानि मोक्षाभिधायकानि, तत सशय, अन्य-
च–अयं सौम्य! तवाभिप्राय —वन्धो हि जीवकर्मसयोगलक्षण., स आदिमान् आदिरहितो वा ?, तत्र यदि प्रथमो विकल्प-
स्ततो विकल्पत्रयप्रसङ्गः, किं पूर्वमात्मन. प्रसूतिः पश्चात्कर्मण यदिवा पूर्वं कर्मण. पश्चादात्मन' आहोश्वित् युगपदुभ-
यस्येति, किञ्चातः ?, सर्वत्रापि दोप, तथाहि—न तावदात्मन' पूर्वं प्रसूतिर्निर्हेतुकत्वात्, व्योमकुसुमवत्, नापि कर्मण
प्राक्प्रसूति कर्त्तुरभावात्, न चाकृत कर्म्म भवति, युगपत्प्रसूतिरप्ययुक्ता, कारणाभावात्, न च अनादिमत्यप्यात्मनि
वन्धो घटामटाट्यते, कारणाभावात्, गगनस्येव, इत्थं चैतदङ्गीकर्त्तव्यमन्यथा मुक्तस्यापि वन्धप्रसङ्गो विशेपाभावात्,
तथा च सति नित्यमुक्तत्वात् मोक्षानुष्ठानवैयर्थ्यमिति, अथ द्वितीय पक्षस्तर्हि नात्मकर्म्मवियोगो भवेद् अनादित्वाद्
आकाशसंयोगवदिति मोक्षानुपपत्तिरिति, तत्र वेदपदानामयमर्थ –स एप.–मुक्तात्मा विगता' छाद्मस्थिकज्ञानादयो गुणा
यस्य स विगुणः विभुः–ज्ञानात्मना सर्वगत', केवलज्ञानस्य सकललोकावभासित्वात्, तथा न वध्यते, मिथ्यादर्शनादि-
वन्धकारणाभावात्, ससरति वा मनुष्यादिभवेपु, नेत्यनुवर्त्तते, कर्मवीजाभावात्, नापि मुच्यते, मुक्तत्वात्, न मोचयति

अधुना षष्ठगणधरवक्तव्यतामाह—

ते पव्वइए सोउं मंडित आगच्छई जिणसगासे । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६१८ ॥

तान्–इन्द्रभूतिप्रमुखान् प्रव्रजितान् श्रुत्वा मण्डिक षष्ठो गणधरो जिनसकाश–भगवत्समीपमागच्छति, किंभूतेनाध्यवसायेनेत्याह—वच्चामि णेत्यादि पश्चार्द्धं पूर्ववत् ॥ स च भगवत्समीपं गत्वा भुवननाथं प्रणम्य प्रमुदितस्तदग्रतस्तस्थौ, अत्रान्तरे—

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वण्णूसव्वदरिसीण ॥ ६१९ ॥

व्याख्या पूर्ववत् ॥

किं मन्ने बंधमोक्खो अत्थी नत्थित्ति संसओ तुज्झ । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥६२०॥

किं मन्यसे बन्धमोक्षौ स्तो न वा स्त इति, नन्वयमनुचितः तव संशय, व्याख्यान्तर पूर्ववत्, यतोऽयं तव संशयो विरुद्धवेदपदश्रुतिसमुत्थो वर्त्तते, तानि च वेदपदान्यमूनि—"स एष विगुणो विभु न बध्यते संसरति वा न मुच्यते मोचयति वा, न वा एष बाह्यमाभ्यन्तरं वा वेद" इत्यादीनि "न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति, अशरीरं वा वसन्त प्रियाप्रिये न स्पृशत" इत्यादीनि च, एतेषां च वेदपदानामयमर्थस्तव चेतसि प्रतिभासते–स एषः–अधिकृतो जीवो विगुणः–सत्त्वादिगुणरहितो विभु–सर्वगत न बध्यते, पुण्यपापाभ्यां न युज्यते इत्यर्थः, संसरति वा, नेत्यनुवर्त्तते, न मुच्यते–न कर्म्मणा वियुज्यते, बन्धाभावात्, नाप्यन्य मोचयति, क्रियारहितत्वात्. अनेनाकर्तृत्वमावेदयति, न

न कदाचन निर्लेपीभवति, यथाऽनागतकाल॰, तथा च अनन्तानन्तसङ्ख्योपेता भव्या इत्यनुच्छेद, अथ सिद्धा अप्यनन्तास्तेषामपि प्रवाहतोऽनादित्वात्तत॰ कथ तेषा तावत्सङ्ख्याकाना परिमितक्षेत्रेऽवस्थानाविरोध ?, उच्यते, अमूर्त्तत्वात्, तथा ह्यमूर्त्ताना प्रतिद्रव्यमनन्ताना केवलज्ञानदर्शनाना सम्पातोऽस्ति न च विरोध इति,

छिन्नंमि संसयम्मी जाइजरामरणविप्पमुक्केण । सो समणो पव्वइओ अद्धुट्ठहिं सह खण्डियसएहिं ॥ ६२१ ॥

व्याख्या पूर्ववत्, नवरम् अर्द्धचतुर्थैरिति–सार्द्धैस्त्रिभिः सह खण्डिकशतैरिति ॥

षष्ठो गणधर समाप्त॰ ॥

---

ते पव्वइए सोउं, मोरिअ आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६२२ ॥

व्याख्या पूर्ववत्, नवरमिह मौर्य आगच्छति जिनसकाशमिति नानात्वम् ।

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीण ॥ ६२३ ॥

अस्या अपि सपातनिका व्याख्या पूर्ववत् ।

किं मन्ने अत्थि देवा उआहु नत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ ६२४ ॥

किं सन्ति देवा उत न सन्तीति मन्यसे, व्याख्यान्तर प्राग्वत्, अयं च सशयस्तव विरुद्धवेदपदश्रुतिप्रभवो वर्त्तते, तानि चामूनि वेदपदानि—"स एष यज्ञायुधी यजमानोऽञ्जसा स्वर्गलोकं गच्छती"त्यादीनि, तथा "अपाम सोमं अमृता

उपदेशदानविकलत्वात्, तथा सासारिकसुखनिवृत्त्यर्थमाह—नवा एप मुक्तात्मा बाह्यं—स्रक्चन्दनादिजनित आभ्यन्तरम्—आभिमानिक वेद—अनुभवात्मना विजानाति, एवमेतानि वेदपदानि मुक्तात्मस्वरूपप्रतिपादकानि, शेपाणि तु सुमतीतान्येव, तथा जीवोऽनादिनिधन सत्त्वे सत्यहेतुकत्वात्, कर्म्मापि प्रवाहतोऽनादिमत्, ततो जीवकर्म्मणोरनादिमानेव सयोगो, धर्म्माधर्म्मास्तिकायाकाशसयोगवदिति प्रथमपक्षोक्तदूपणानवकाश', योऽपि द्वितीयपक्षेऽभिहितो दोपोऽनादित्वात्सयोगस्य वियोगाभाव इति, सोऽप्यसमीचीन, तथादर्शनात्, तथाहि—काञ्चनोपलयो सयोगोऽनादिसन्ततिगतोऽपि क्षारमृत्पुटपाकादिद्रव्यसयोगोपायतो विघटमानको दृष्टस्तथा जीवकर्म्मणोरपि ज्ञानदर्शनचारित्रोपायतो वियोग इति न कश्चिद्दोप, अथ यद्यनादि सर्वं कर्म्म ततस्तस्य जीवकृतत्वानुपपत्ति•, जीवकृतत्वेऽनादित्वविरोधात्, तदसम्यक्, वस्तुगत्यनवबोधात्, तथाहि—जीवेन तथा तथा मिथ्यादर्शनादिसव्यपेक्षेण तदा तदोपादीयते कर्म्म तेन जीवेन कृतमित्युच्यते, तच्च तथा प्रवाहापेक्षया चिन्त्यमानमादिविकलमित्यनादि, निदर्शनं चात्र कालो, यथा हि यावान् अतीत• कालस्तेनाशेपेण वर्त्तमानत्वमनुभूतमथ चासौ प्रवाहतोऽनादिरेव कर्म्माणीति, यदप्युक्तं 'मुक्तस्यापि वन्धप्रसङ्गो विशेपाभावा'दिति, तदप्ययुक्तम्, विशेपाभावासिद्धे, तथाहि—ससारिजीव• कपायादियुक्त', कपायादियुक्तश्च कर्म्मणो योग्यान् पुद्गलानादत्ते इति तस्य कर्म्मवन्धोपपत्ति', मुक्तस्तु कपायादिपरिणामविकलः, शुक्लध्यानमाहात्म्यतस्तेपा समून्मूलितत्वात्, ततो मुक्त्यवस्थाया कर्म्मवन्धाप्रसङ्ग, न च वाच्यम्—एव सति तर्हि निरन्तर मुक्तिगमनतो भव्यानामुच्छेदप्रसङ्ग, अनन्तानन्तसङ्ख्योपेतत्वात्, इह यदनन्तानन्तसङ्ख्योपेत तत्प्रतिसमयमेकद्वित्र्यादिसङ्ख्ययाऽपगच्छदपि

कि पुन शेपर्द्धिसमुदाया इत्यनित्यत्वभावनाप्रतिपादकमिद वाक्य, न तु देवसत्तानिपेधकमिति, तथा स्वच्छन्दचारिणोऽप्यमी यदिह नागच्छन्ति तत्रेद कारण-नागच्छन्तीह सदैव सुरगणा, सङ्क्रान्तदिव्यप्रेमतया विपयप्रसक्तत्वात्, प्रकृष्टरूपगुणस्त्रीप्रसक्तविच्छिन्नरम्यदेशान्तरगतमनुष्यवत्, तथा असमासकर्त्तव्यत्वात्, बहुकर्त्तव्यताप्रसाधनप्रयुक्तविनीतपुरुपवत्, तथा अनधीनमनुजकार्यत्वात् नारकवत् अनभिमतगेहादौ नि·सङ्गयतिवद्धेति, अशुभत्वान् नरभवस्य तद्गन्धासहिष्णुतया नागच्छन्ति, कडेवरमिव हसा इति, जिनजन्ममहिमादिपु पुनर्भक्तिविशेपात् भवान्तररागतश्च क्वचिदागच्छन्त्येव, तथा चैते साम्प्रतं भवतोऽपि प्रत्यक्षा एव, शेपकालमपि सामान्यतश्चन्द्रसूर्यादिविमानप्रत्यक्षत्वात् तद्वासिसिद्धिरिति कृतं प्रसङ्गेन,

छिन्नंमि संसयंमी जाइजरामरणविप्पमुक्केण । सो समणो पवइओ अद्धुट्ठहि खंडियसएहि ॥ ६२५ ॥

॥ सप्तमो गणधर समाप्त ॥

व्याख्या पूर्ववत् ।

---

ते पवइए सोउं अकंपिओं आगच्छइ जिणसगासं । वच्चामि ण वदामी वंदित्त। पज्जुवासामि ॥ ६२६ ॥

व्याख्या पूर्ववत्, नवरमत्राकम्पिक आगच्छति-जिनसकाशमिति नानात्वम् ।

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीण ॥ ६२७ ॥

अस्या· सपातनिका व्याख्या प्राग्वत् ।

अभूम अगमज्योतिर्विदाम देवान् किं नूनमस्मात्तृणवदरातिः किमु धूर्त्तिरमृत मर्त्त्यस्ये'त्यादीनि 'को जानाति मायोपमान् गीर्वाणान् इन्द्रयमवरुणकुवेरादी'नित्यादीनि च, एतेषा चायमर्थस्तव मतौ प्रतिभासते—स एष यज्ञ एव दुरितदारणक्षमत्वादायुध-प्रहरण यज्ञायुध तदस्यास्तीति यज्ञायुधी यजमानोऽञ्जसा-प्रगुणेन न्यायेन स्वर्गलोकं गच्छतीति, तथा अपाम-पीतवन्त. सोम-लतारस अमृत-अमरणधर्माणो अभूम-भूता स्म अगमन्-गता ज्योति—स्वर्गं अविदाम देवान्—देवत्व प्राप्ता स्म, किं नूनमस्मादूर्ध्वं तृणवत्करिष्यति, कोऽसावित्याह—अराति.-व्याधिः, तथा किमु प्रश्ने धूर्त्ति.-जरा, अमृतवत्तस्य अमृतत्वं प्राप्तस्य मर्त्त्यस्य पुरुषस्येत्यर्थं, अमरणधर्म्मणो मनुष्यस्य किं करिष्यति जराव्याधय इति भाव., तदेवममूनि किल वेदपदानि देवसत्ताप्रतिपादकानि, 'को जानाति मायोपमानि'त्यादीनि देवसत्ताप्रतिषेधकानीति तव सशय, तथा सौम्य ! त्वमित्थं मन्यसे—नारका. किल सङ्क्लिष्टासुरपरमाधार्मिकायत्ततया कर्मवशतया च परतन्त्रत्वात् स्वयं च दु.खसन्तप्तत्वात् इहागन्तुमशक्ताः, वयमपि तत्रानेन शरीरेण कर्म्मवशतयैव गन्तुमशक्ता', तत प्रत्यक्षकरणोपायासम्भवात् श्रुतिस्मृतिग्रन्थेषु श्रूयमाणा आगमप्रामाण्यत' श्रद्धेया भवन्तु, ये पुनर्देवास्ते स्वच्छन्दचारिण. कामरूपिण प्रकृष्टदिव्यप्रभावा इहागमनसामर्थ्यवन्तस्ततः किमितीह नागच्छन्ति येन न दृश्यन्ते इति, तस्मात्ते न सन्त्यस्मदाद्यप्रत्यक्षत्वात् खरविषाणवदिति, तत्र वेदपदाना चेत्यादि पूर्ववत्, तत्र वेदपदानामयमर्थ—को जानाति मायोपमान् गीर्वाणान् इन्द्रयमवरुणकुवेरादीनित्यादि, तत्र परमार्थचिन्ताया सन्ति देवा मत्प्रत्यक्षत्वात् मनुष्यवत्, भवतोऽप्यागमप्रमाणत. सिद्धाः, केवल सर्वमनित्यं मायोपम, देवा अपि हि स्वकृतभोगफलकर्म्मपर्यन्ते विनश्वरा,

क्षयोपशमस्तथा तस्य रूपाविर्भावविशेषो दृश्यते, तथा च कश्चिद्बहु जानाति कश्चिद्बहुतरमिति, न चायं ज्ञानविशेष खल्वात्मनस्तत्स्वभावतामन्तरेणोपपद्यते, ततोऽवश्यमसौ ज्ञस्वभाव प्रतिपत्तव्य , तस्य चाशेषावरणविलये समस्तज्ञेयपरिच्छेदकता ज्ञस्वभावत्वात्, तथा चास्मिन्नर्थे लौकिको दृष्टान्तो, यथा पद्मरागादिरुपलविशेषो भास्वरस्वरूपोऽपि स्वगतमलकलङ्काङ्कितस्तदा वस्त्वप्रकाशयन्नपि क्षारमृत्पुटपाकाद्युपायतः स्वगतमललेपापगमे प्रकाशयति, एवमात्मापि ज्ञस्वभाव. कर्ममलकलङ्काङ्कित प्रागशेष वस्त्वप्रकाशयन्नपि सम्यक्त्वज्ञानतपोविशेषसयोगोपायतोऽपेतसमस्तावरणः समस्तं वस्तु प्रकाशयति, प्रतिबन्धकाभावात्, न चाप्रतिबद्धस्वभावस्यापि तस्य सर्वत्र प्रकाशनव्यापाराभावो, ज्ञस्वभावत्वात्, न हि ज्ञो ज्ञेये सति प्रतिबन्धशून्यो न प्रवर्त्तते, अथ पद्मरागोऽपि प्रकाशकस्वभाव., न चासौ प्रतिबन्धाभावे सर्वं प्रकाशयति, ततस्तेनैव व्यभिचार इति, तदसम्यक्, तस्य सन्निकृष्टार्थप्रकाशनस्वभावत्वाद् विप्रकृष्टविषये देशविप्रकर्षेणैव प्रतिबन्धभावात्, न चात्मनोऽपि देशविप्रकर्षः परिच्छेदप्रतिबन्धहेतु ,तस्यागमगम्येषु सूक्ष्मव्यवहितविप्रकृष्टेष्वखिलपदार्थेष्वधिगतिसामर्थ्यदर्शनात्, तथा च परमाणुमूलकीलकोदकामरलोकचन्द्रोपरागादिपरिच्छेदसामर्थ्यमस्यागमोपदेशतः क्षयोपशमवतोऽपि दृश्यते, एव साक्षात्कारि क्षायिकमिति प्रतिपत्तव्यमिति क्षायिकज्ञानवता प्रत्यक्षा नारकाः, भवतोऽप्यनुमानगम्याः, तच्चेदमनुमान–विद्यमानोत्कृष्टं प्रकृष्टपापफलं कर्मफलत्वात् पुण्यफलवत्, न च तिर्यङ्नरा एव प्रकृष्टपापफलभुज , तस्यौदारिकशरीरवता वेदयितुमशक्यत्वात्, अनुत्तरसुरजन्मनिबन्धनप्रकृष्टपुण्यफलवत्, तथा आगमप्रमाणगम्याश्चैते,

किं मन्ने नेरइया अत्थी नत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ २२८ ॥

नरान् स्वयोग्यान् कायन्ति–शब्दयन्ति आकारयन्तीति नरकास्तेषु भवा नारका , ते नारका किं सन्ति उत न सन्तीति मन्यसे, व्याख्यान्तर प्राग्वत् , अयं च संशयस्तव विरुद्धपदश्रुतिसमुद्भवो वर्त्तते, तानि चामूनि वेदपदानि–'नारको वै एष जायते य शूद्रान्नमश्नाति' इत्यादि, अस्यायमर्थ –'एष:' ब्राह्मणो नारको जायते य' शूद्रान्नमश्नातीत्यादीनि किल वेदवाक्यानि नारकसत्ताप्रतिपादकानि, 'नह वै प्रेत्य नारका सन्ती'त्यादीनि तु नारकाभावप्रतिपादकानि, तथा सौम्य ! त्वमित्थ मन्यसे–देवा हि चन्द्रादयस्तावत्प्रत्यक्षा एव, अन्येऽपि औपयाचितकादिफलदर्शनतोऽनुमानतोऽवगम्यन्ते, नारकास्त्व-भिधानव्यतिरिक्तार्थशून्याः कथं प्रत्येतव्या इति तदभावः, तथा चात्र प्रयोग'–न सन्ति नारका. साक्षादनुमानतो वाऽ-नुपलब्धे', व्योमकुसुमवत् , व्यतिरेके देवा', तत्र 'वेदपदाना चे'त्यादि, तत्र वेदपदानामर्थं चशब्दाद्युक्तिं भावार्थं च न जानासि, यतस्तेषा वेदपदानामयमर्थ –ये खलु निरुपाधितप सयमादिना उपचितपुण्यप्राग्भारास्ते न ह वै–न प्रेत्य–परलोके नारका सन्ति–भवन्ति जायन्ते, तेषा स्वर्गसत्कुलप्रत्यायातिपरम्परया केषाञ्चित्तद्भवेऽपि मोक्षगमनात् , ततो नामूनि नारकाभावप्रतिपादकानि वेदपदानि, किन्तु पुण्यवता नारकभवनप्रतिषेधकानीत्ययुक्तः संशय , तथा सौम्य ! ते नारका कर्म्मपरतन्त्रत्वादिहागन्तुमशक्ता , भवद्विधानामपि कर्म्मपरतन्त्रत्वादेव तत्र गमनशक्त्यभाव , ततो न युष्मादृशा तदुप-लब्धिः, क्षायिकज्ञानसम्पदुपेताना तु वीतरागाणा ते प्रत्यक्षा एव, अपास्तसमस्तावरणतया समस्तवस्तुज्ञानोपेतत्वात् , न च वाच्यमशेषपदार्थविद एव क्षायिकज्ञा न सन्तीति, यतो ज्ञस्वभाव आत्मा. केवल यथा [illegible] कर्मण

क्षयोपशमस्तथा तस्य रूपाविर्भावविशेषो दृश्यते, तथा च कश्चिद्बहु जानाति कश्चिद्बहुतरमिति, न चाय ज्ञानविशेष खल्वा-
त्मनस्तत्स्वभावतामन्तरेणोपपद्यते, ततोऽवश्यमसौ ज्ञस्वभाव प्रतिपत्तव्य , तस्य चाशेषावरणविलये समस्तज्ञेयपरिच्छेद-
कता ज्ञस्वभावत्वात्, तथा चास्मिन्नर्थे लौकिको दृष्टान्तो, यथा पद्मरागादिरुपलविशेषो भास्वरस्वरूपोऽपि स्वगतमलक-
लङ्काङ्कितस्तदा वस्त्वप्रकाशयन्नपि क्षारमृत्पुटपाकाद्युपायत' स्वगतमललेपापगमे प्रकाशयति, एवमात्मापि ज्ञस्वभावः कर्म-
मलकलङ्काङ्कित' प्रागशेष वस्त्वप्रकाशयन्नपि सम्यक्त्वज्ञानतपोविशेषसयोगोपायतोऽपेतसमस्तावरणः समस्तं वस्तु प्रकाश-
यति, प्रतिबन्धकाभावात्, न चाप्रतिबद्धस्वभावस्यापि तस्य सर्वत्र प्रकाशनव्यापाराभावो, ज्ञस्वभावत्वात्, न हि ज्ञो
ज्ञेये सति प्रतिबन्धशून्यो न प्रवर्त्तते, अथ पद्मरागोऽपि प्रकाशकस्वभाव', न चासौ प्रतिबन्धाभावे सर्व प्रकाशयति,
ततस्तेनैव व्यभिचार इति, तदसम्यक्, तस्य सन्निकृष्टार्थप्रकाशनस्वभावत्वाद् विप्रकृष्टविषये देशविप्रकर्षेणैव प्रतिबन्धभा-
वात्, न चात्मनोऽपि देशविप्रकर्ष• परिच्छेदप्रतिबन्धहेतु',तस्यागमगम्येषु सूक्ष्मव्यवहितविप्रकृष्टेष्वखिलपदार्थेष्वधिगतिसा-
मर्थ्यदर्शनात्, तथा च परमाणुमूलकीलकोदकामरलोकचन्द्रोपरागादिपरिच्छेदसामर्थ्यमस्यागमोपदेशतः क्षयोपशमवतोऽपि
दृश्यते, एव साक्षात्कारि क्षायिकमिति प्रतिपत्तव्यमिति क्षायिकज्ञानवता प्रत्यक्षा नारका', भवतोऽप्यनुमानगम्याः,
तच्चेदमनुमान–विद्यमानोत्कृष्टं प्रकृष्टपापफलं कर्म्मफलत्वात् पुण्यफलवत्, न च तिर्यङ्नरा एव प्रकृष्टपापफलभुज',
तस्यौदारिकशरीरवता वेदयितुमशक्यत्वात्, अनुत्तरसुरजन्मनिबन्धनप्रकृष्टपुण्यफलवत्, तथा आगमप्रमाणगम्याश्चैते,

यत एवमागम –"सततानुवन्धयुक्तं दुःखं नरकेषु तीव्रपरिणामम्। तिर्यक्षु तृष्णाभयक्षुद्वधादि दुःखं सुख चाल्पम् ॥ १ ॥ सुखदुःखे मनुजाना मनःशरीराश्रये वहुविकल्पे। सुखमेव तु देवानामल्पं दुःख तु मनसिभवम् ॥ २॥" इत्यादि, एवम्–

छिन्नंमि संसयमी जाइजरामरणविप्पमुक्केणं। सो समणो पव्वइतो तिहिं तु सह खंडियसएहिं ॥ ६२९ ॥

व्याख्या पूर्ववत्, नवरमत्र नानात्वं त्रिभिः खण्डिकशतैरिति ॥

अष्टमो गणधर समाप्त ॥

ते पव्वइए सोउं अयलो आगच्छई जिणसगासं। वच्छामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६३० ॥

व्याख्या पूर्ववत्, नवरमचलभ्राता आगच्छति जिनसकाशमिति विशेषः,

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं। नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीण ॥ ६३१ ॥

अस्या सपातनिका व्याख्या पूर्ववत्।

किं मन्ने पुण्णपावं अत्थी नत्थित्ति संसओ तुज्झ। वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ ६३२ ॥

किं पुण्यपापे स्तः किं वा नेति मन्यसे, व्याख्यान्तर पूर्ववत्, अयं च सशयस्तव विरुद्धवेदपदश्रुतिप्रभवो दर्शनान्तरविरुद्धश्रुतिप्रभवश्च, तानि चामूनि वेदपदानि–'पुरुष एवेदं ग्नि सर्व'मित्यादि, अस्य यथा द्वितीयगणधरवक्तव्यताया व्याख्या तथाऽत्रापि, तथा सौम्य! अचलभ्रातस्त्वमित्थं मन्यसे—दर्शनविप्रतिपत्तिश्चात्र, तत्र केषाञ्चिद्दर्शन–पुण्यमे-

वैकमस्ति न पाप, तदेव चावाप्तप्रकर्षावस्थं स्वर्गाय क्षीयमाण मनुष्यतिर्यङ्नरकादिभवफलाय, तदशेषक्षयाच्च मोक्ष इति, यथा अत्यन्तपथ्याहारसेवनादुत्कृष्टमारोग्यसुखं भवति, किञ्चित्पथ्याहारपरिवर्जनाच्चारोग्यसुखहानि ,अशेषाहारपरिक्षयाच्च सुखाभावकल्पोऽपवर्गः, अन्येषा तु पापमेवैक, न पुण्यमस्ति, तदेव चोत्तमास्थामनुप्राप्त नारकभवायाल, क्षीयमाण तिर्यङ्नरामरभवायेति, तदत्यन्तक्षयाच्च मोक्ष इति, यथा अत्यन्तापथ्याहारसेवनात् परममनारोग्य, तस्यैव किञ्चित्किञ्चिदपकर्षादारोग्यसुख, अशेषपरित्यागात् मृतिकल्पो मोक्ष इति, अन्येषा तूभयमप्यन्योऽन्यानुविद्धस्वरूपकल्पं सम्मिश्र सुखदुःखाख्यहेतुफलभूतं, तथाहि–नैकान्ततः किल ससारिण' सुख दु'खं वाऽस्ति, देवानामपि चेर्ष्यादियुक्तत्वात्, नारकाणामपि वा पञ्चेन्द्रियत्वानुभवात्, इत्थंभूतपुण्यपापाख्यवस्तुक्षयाच्च मोक्ष इति, अपरेषा तु स्वतन्त्रमुभयं विविक्तसुखदु.खकारणं, तत्क्षयाच्च नि.श्रेयसावाप्तिरिति, तदेवं दर्शनाना परस्परविरुद्धत्वेनाप्रमाणत्वादस्मिन् विषये प्रमाणाभाव इति । तथा 'पुण्यः पुण्येने'त्यादिना प्रतिपादिता तत्सत्ता, ततः सशय', तत्र वेदपदाना चार्थ, चशब्दात् युक्ति हृदय च, न जानासि, यतस्तेषामयमर्थः, तत्र यथा द्वितीयगणधरवक्तव्यताया वेदपदानामर्थः स्वभावपक्षनिराकरणप्रवणोऽभिहितस्तथाऽत्र वक्तव्य., सामान्यकर्मसिद्धिरपि तथैव वक्तव्या, यच्च दर्शनानामप्रामाण्यं परस्परविरुद्धत्वेन मन्यसे तदसाम्प्रतम्, एकस्य प्रमाणत्वात्, तथाहि–पाटलिपुत्रादिविविधस्वरूपाभिधायकाः सम्यक्स्वरूपाभिधायकयुक्ताः परस्परविरुद्धवचसोऽपि न सर्व एवाप्रमाणता भजन्ते, तत्र यत्प्रमाणं तत् अप्रमाणनिरासद्वारेण प्रदर्शयिष्याम., तत्र न तावत्पुण्यमेवापचीयमान दु खकारण, तस्य सुखहेतुत्वेनेष्टत्वात्, स्वल्पस्यापि स्वल्पसुख-

साधकत्वात्, तथा चाणीयसो हेमपिण्डादणुरपि सौवर्ण एव घटो भवति, न मार्त्तिको राजतो वेति, न च पुण्याभावो दु'खहेतुस्तस्य निरुपाख्यतया हेतुत्वायोगात्, न च सुखाभाव एव स्वसत्ताविकलो दु खं, तस्यानुभूयमानत्वात्, तत स्वानुरूपकारणपूर्विका दु'खानुभूति अनुभूतित्वात् सुखानुभूतिवदिति केवलपुण्यवादनिरास, केवलपापपक्षेऽपि इदमेवोपपत्तिजाल विपरीत वक्तव्य, नापि सर्वथाऽन्योऽन्यानुविद्धस्वरूपमुभयात्मकमेक निरंशवस्त्वन्तरमभ्युपगन्तु युक्त, सम्मिश्रसुखदु'खाख्यकार्यप्रसङ्गात्, अथ च परस्परपरिहारेण विविक्ते सुखदु खे अनुभूयेते, तथा स्वसंवेदनप्रमाणसिद्धत्वात्, अन्यच्च—केवलसुखानुभव' श्रूयतेऽनुत्तरसुराणा, केवलदु'खानुभवो नारकाणां, न च सर्वथा सम्मिश्रैकरूपात्कारणादेव विविक्त कार्यभेदो युक्त', तस्मादन्यदेव निमित्तं सुखातिशयस्यान्यदेव च दु खातिशयस्य, न च सर्वथैकरूपस्य सुखातिशयनिबन्धनांशवृद्धिर्दु'खातिशयकारणांशहान्या सुखातिशयप्रभवाय दु खातिशयनिबन्धनांशवृद्धिः सुखातिशयकारणांशहान्या दु.खातिशयप्रभवाय कल्पयितु न्याय्या, भेदप्रसङ्गात्, तथा च यद्वृद्धावपि यस्य वृद्धिर्न भवति तत्ततो भिन्न प्रतीतमेवेति सर्वथैकरूपता पुण्यपापयोर्न सङ्गता, कर्म्मसामान्यापेक्षया त्वविरुद्धाऽपि, तथाहि—सातसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यमन्यत् पाप, सर्व च तत् कर्मेति, तस्माद्विविक्ते पुण्यपापे इति प्रतिपत्तव्यम्, सर्वस्यापि च ससारिण एतदुभयमप्यस्ति, केवलं किञ्चित् कस्यचिदुपशान्त किञ्चित्क्षयोपशममुपगतं किञ्चित् क्षीण किञ्चिदुदीर्ण तत सुखदु खवैचित्र्य जन्तूनामिति ।

छिन्नंमि संसयंमी जाइजरामरणविप्पमुक्केण । सो समणो पव्वइओ तीहिं उ सह खंडियसएहिं ॥ ६३३ ॥

नवमो गणधरः समाप्तः ॥

व्याख्या पूर्ववत् ॥

ते पव्वइए सोउं मेयज्जो आगच्छई जिणसगासं । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६३४ ॥

पूर्ववत्, नवरं मेतार्य आगच्छतीति नानात्वम् ।

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केणं । नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीणं ॥ ६३५ ॥

अस्याः सपातनिका व्याख्या पूर्ववत् ।

किं मन्ने परलोगो अत्थी नत्थित्ति संसओ तुज्झं । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ ६३६ ॥

किं परलोको—भवान्तरगतिलक्षणोऽस्ति किं वा नास्तीति मन्यसे, व्याख्यान्तरं पूर्ववत् । अयं च संशयस्तव विरुद्धवेदपदश्रुतिनिबन्धनः, तानि च वेदपदान्यमूनि—'विज्ञानघन एवैतेभ्यो भूतेभ्य' इत्यादीनि, तथा 'स वै अयमात्मा ज्ञानमय' इत्यादीनि च प्रथमगणधरवक्तव्यतायामिव भावनीयानि, तथा सौम्य ! त्वमित्थं मन्यसे—भूतसमुदायधर्म्मश्चैतन्यमिति कुतो भवान्तरलक्षणपरलोकसम्भवो, भूतसमुदायविनाशे चैतन्यस्यापि विनाशात्, अन्यच्च—भवेदात्मा तथापि स नित्योऽनित्यो वा ?, तत्र नित्यपक्षेऽप्रच्युतानुत्पन्नस्थिरैकस्वभावतया विभुतया च परलोकाभावः, अनित्यपक्षेऽपि निरन्वयविनश्वरस्वभावतया कारणक्षणस्य सर्वथा विनाशे उत्तरकालमिह लोकेऽपि क्षणान्तराप्रभव इति

कुत परलोकसम्भव ?, तत्र वेदाना चार्थ, चशब्दाद्युक्तिं हृदय च, तेपा च वेदपदानामयमर्थ—तत्र विज्ञानघनेत्यादीना पूर्ववद्वाच्य, न च भूतसमुदायश्चैतन्य, सन्निकृष्टदेहोपलब्धावपि चैतन्यविशेपानुपलम्भात्, इह यस्मिन्नुपलब्धेऽपि यदयस्य नोपलभ्यते तत् ततो भिन्न, यथा घटात् पट, नोपलभ्यते च देहोपलब्धावपि चैतन्यविशेप इति, इतश्च देहादन्यचैतन्य चलनादिचेष्टानिमित्तत्वात्, इह यत् यस्य चलनादिचेष्टानिमित्तं तत्ततो भिन्न दृष्टं, यथा मरुत् पादपात्, चलनादिचेष्टानिमित्त च चैतन्य देहस्येति न देहस्य धर्मश्चैतन्य, किन्त्वात्मन, तस्य चानादिमत्कर्म्मसन्तति-समालिङ्गितत्वादुत्पादव्ययध्रौव्ययुक्तत्वाच्च कर्मपरिणामापेक्षा मनुष्यादिपर्यायनिवृत्त्या देवादिपर्यायान्तरप्राप्तिरस्त्यवि-रुद्धेति परलोकसिद्धि, यदपि च नित्यानित्यैकान्तपक्षोक्त दूपण तदपि जात्यन्तरात्मकनित्यानित्यशबलरूपपक्षाभ्युप-गमेन तिरस्कृतत्वान्न नो ढौकत इति ॥

छिन्नमि ससयमी जाइजरामरणविप्पमुक्केण । सो समणो पव्वइतो तिहिं उ सह खंडियसएहिं ॥ ६३७ ॥

व्याख्या पूर्ववत् । दशमो गणधर समाप्तः ॥

---

ते पव्वइए सोउं पभास आगच्छई जिणसगासे । वच्चामि ण वंदामी वंदित्ता पज्जुवासामि ॥ ६३८ ॥

व्याख्या पूर्ववत्, नवर प्रभास आगच्छतीति नानात्व ।

आभट्ठो य जिणेणं जाइजरामरणविप्पमुक्केण । नामेण य गोत्तेण य सव्वन्नूसव्वदरिसीण ॥ ६३९ ॥

अस्याः सपातनिका व्याख्या पूर्ववत् ।

किं मन्ने निव्वाण अत्थी नत्थित्ति ससओ तुज्झ । वेयपयाण य अत्थं न याणसी तेसिमो अत्थो ॥ ६४० ॥

किं निर्वाणमस्ति किंवा नास्तीति मन्यसे, व्याख्यान्तरं पूर्ववत्, अयं च संशयस्तव विरुद्धवेदपदश्रुतिनिबन्धनः, तानि च वेदपदान्यमूनि—'जरामर्यं वा एतत्सर्वं यदग्निहोत्रं' तथा 'सैषा गुहा दुरवगाहा' तथा 'द्वे ब्रह्मणी परमपरं च, तत्र परं सत्यं ज्ञानमनन्तरं ब्रह्मे'ति, तेषां चायमर्थस्तव चेतसि वर्त्तते—यदेतदग्निहोत्रं तत् जरामर्यमेव—यावज्जीवं कर्त्तव्यमिति, अग्निहोत्रक्रिया च भूतवधहेतुत्वात् सबलरूपा, सा च स्वर्गफलैव स्यात्, नापवर्गफला, यावज्जीवमिति चोक्ते कालान्तरं नास्ति यत्रापवर्गहेतुभूतक्रियान्तरारम्भः स्यात्, तस्मात्साधनाभावात् मोक्षाभावः, तदेवममूनि किल वेदपदानि मोक्षाभावप्रतिपादकानि, शेषाणि तु तदस्तित्वसूचकानि, यतो गुहाऽत्र मुक्तिरूपा, सा च संसाराभिनन्दिना दुरवगाहा—दुष्प्रवेशा, तथा परं ब्रह्म सत्यं—मोक्षः, अनन्तरं तु ज्ञानमिति, अमूनि मोक्षास्तित्वप्रतिपादकानीति तव संशयः, तथा-तथा सौम्य! त्वमित्थं मन्यसे—संसारभवो मोक्षः, संसारश्च रागादिनिबन्धनः, रागादीनां चात्यन्तिकः क्षयोऽनुपपन्नः, तथा प्रमाणेन प्रतीतेः, तच्च प्रमाणमिदं—यद् हि—रागादयो जन्तोरनादिमन्तो, यच्चानादिमत् न तद्विनाशमाविशति, यथाऽऽकाशम्, अनादिमन्तश्च रागादय आत्मनो व्यतिरिक्ता वा भवेयुरव्यतिरिक्ता वा ?, व्यतिरेके सर्वेषां वीतरागत्वप्रसङ्गः, रागादिभ्यो व्यतिरिक्तत्वात्, विवक्षितपुरुषवत्, अथाव्यतिरिक्तास्ततस्तत्प्रक्षये आत्मनोऽपि क्षयप्रसङ्गः, तदव्यतिरिक्तत्वात्, तत्स्वरूपवत्, तथा च कुतस्तस्य वस्तुतो मोक्षः ?, तस्यैवाभावादिति, तत्र

येदपदाना चार्थं, चशब्दात् युक्ति हृदयं च न जानासि, यतस्तेषामयमर्थ 'जरामर्यं वे'ति वाशब्दोऽप्यर्थे, ततश्च यदेतद-
ग्निहोत्र तत् यावज्जीव—सर्वमपि काल कर्त्तव्यम्, वाशब्दात् मुमुक्षुभिर्मोक्षहेतुभूतमप्यनुष्ठान विधेयमिति नापवर्गप्रा-
पणक्रियारम्भकालास्तिता निषिद्धा, तथा यद्यपि रागादयो दोषा जन्तोरनादिमन्तस्तथापि कस्यचित्स्त्रीशरीरादिषु
यथावस्थितवस्तुतत्त्वावगमेन तेषा प्रतिपक्षभावनातः प्रतिक्षणमपचयो दृश्यते, तत सम्भाव्यते विशिष्टकालादिसामग्री-
सद्भावे भावनाप्रकर्षविशेषभावतो निर्मूलमपि क्षय, अथ यदि प्रतिपक्षभावनात' प्रतिक्षणमपचयो दृष्टस्तथापि तेषामात्य-
न्तिकोऽपि क्षयः सम्भवतीति कथमवसीयते ?, उच्यते, अन्यत्र तथा प्रतिबन्धग्रहणात्, यथा शीतस्पर्शसम्पाद्या रोमह-
र्षादय॰ शीतप्रतिपक्षस्य वह्नेर्मन्दताया मन्दा उपलब्धाः उत्कर्षे च निरन्वयविनाशधर्म्माण॰, ततोऽन्यत्रापि बाधकस्य मन्दताया
बाध्यस्य मन्दतादर्शनाद्बाधकोत्कर्षे बाध्यस्यावश्य निरन्वयविनाशो वेदितव्य, अन्यथा बाधकमन्दताया मन्दता न स्यात्,
अथास्ति ज्ञानस्य ज्ञानावरणीय बाधक, ज्ञानावरणीयकर्म्ममन्दताया च ज्ञानस्यापि मनाक् मन्दता, अथ च प्रबलज्ञाना-
वरणीयकर्मोदयोत्कर्षेऽपि न ज्ञानस्य निरन्वयो विनाश', एवं प्रतिपक्षभावनोत्कर्षेऽपि न रागादीनामत्यन्तोच्छेदो भवि-
ष्यति, तदयुक्त, द्विविध हि बाध्य—सहभूस्वभाव तदन्यथाभूत च, तत्र यत् सहभूस्वभावभूतं तन्न कदाचनापि निरन्वय
विनाशमुपयाति, ज्ञान चात्मन' सहभूस्वभावम्, आत्मा च परिणामिनित्य, ततोऽत्यन्तप्रकर्षवत्यपि ज्ञानावरणीयकर्मोदये
ज्ञानस्य न निरन्वयो विनाशः, रागादयस्तु लोभादिकर्म्मविपाकोदयसम्पादितसत्ताकास्तत कर्मणो निर्मूलमपगमे तेऽपि
निर्मूलमपगच्छन्ति, नन्वासता कर्मसम्पाद्या रागादय, तथापि कर्म्मनिवृत्तौ ते निवर्त्तन्ते इति नावश्य नियमो, नहि

दहननिवृत्तौ तत्कृता काष्ठे अङ्गारता निवर्त्तते, तदसत्, यत इह किञ्चित् क्वचित् निवर्त्त्यविकारमापादयति, यथा अग्निः सुवर्णे द्रवता, तथाहि—अग्निनिवृत्तौ तत्कृता सुवर्णे द्रवता निवर्त्तते, किञ्चित् पुन क्वचित् अनिवर्त्त्यविकारारम्भक, यथा स एवाग्नि काष्ठे, न खलु श्यामतामात्रमपि काष्ठदहननिवृत्तौ निवर्त्तते, कर्म्म चात्मनि अनिवर्त्त्यविकारारम्भकं भवेत्तर्हि यदपि तदपि कर्म्मणा कृत न कर्म्मनिवृत्तौ निवर्त्तेत, यथा अग्निना श्यामतामात्रमपि काष्ठे कृतमग्निनिवृत्तौ, ततश्च यदेकदा कर्म्मणाऽऽपादित मनुष्यत्वममरत्व कृमिकीटत्व शिरोभेदनादि च तत्सर्वकालं तथैवावतिष्ठेत, न चैतत् दृश्यते,तस्मान्निवर्त्त्यविकारारम्भकं कर्म्म, तत कर्म्मनिवृत्तौ रागादीनामपि निवृत्ति', यदपि च प्रागुपन्यस्त प्रमाणं 'यदनादिमत् न तद्विनाशमाविशति यथाऽऽकाश'मिति, तदप्यप्रमाण, हेतोरनैकान्तिकत्वात्, प्रागभावेन व्यभिचारात्, तथाहि—प्रागभावोऽनादिमानपि विनाशमाविशति, अन्यथा कार्यानुत्पत्ते', भावनाधिकारी च सम्यग्दर्शनादिरत्नत्रय-सम्पत्समन्वितो वेदितव्य', इतरस्य तदनुरूपानुष्ठानप्रवृत्त्यभावेन तस्या मिथ्यात्वरूपत्वात्, आह च प्रवचनम्—"नाणी तवंमि निरओ चारित्ती भावणाए जोगो"त्ति, सा च भावना रागादिदोषनिदानस्वरूपविषयफलगोचरा यथागममवसा-तव्या, "जं कुच्छियाणुजोगो पयइविसुद्धस्स चेव जीवस्स । एएसिमो नियाण वुहाण न य सुदर एयं ॥ १ ॥ रूवपि सकिलेसोऽभिस्सगापीइमाइलिंगाउ । परमसुहपच्चणीओ एयंपि असोहणं चेव ॥२॥ विसओ य भगुरो खलु गुणरहिओ तह य तहऽतहारूवो । सपत्तिनिप्फलो केवल तु मूल अणत्थाणं ॥ ३ ॥ जम्मजरामरणाई विचित्तरूवो फल तु ससारो । वुहजणनिवेयकरो एसोवि तहाविहो चेव ॥ ४ ॥ ( धर्म ११६९–७०–१–२ ) अपिच—सूत्रानुसारेण ज्ञानादिषु यो

नैरन्तर्येणाभ्यासस्तद्रूपा भावना वेदितव्या, तस्या अपि रागादिप्रतिपक्षत्वात्, नहि तत्त्ववृत्त्या सम्यग्ज्ञानाद्यभ्यासव्या-पृतमनस्कस्य स्त्रीशरीररामणीकादिविषय चेत'प्रवृत्तिमातनोति, तथानुपलम्भात्, यदप्युक्त 'किञ्च—रागादय आत्मनो व्यतिरिक्ता वा भवेयुरव्यतिरिक्ता वा' इत्यादि, तदप्ययुक्तं, भेदाभेदपक्षस्य जात्यन्तरस्याभ्युपगमात्, केवलभेदाभेदपक्षे धर्म्मधर्म्मिभावानुपपत्ते, तथाहि—धर्म्मधर्म्मिणोरेकान्तेन भेदेऽभ्युपगम्यमाने धर्म्मिणो नि स्वभावतापत्ति, स्वभावस्यापि धर्म्मत्वात्, तस्य च ततोऽन्यत्वात्, स्वः भाव' स्वभाव' स्वस्यैव चात्मीया सत्ता, नतु तदर्थान्तर धर्म्मरूपं, ततो न नि स्वभावतापत्तिरिति चेत् न, इत्थ स्वरूपसत्ताभ्युपगमे तदपरसत्तासामान्ययोगकल्पनावैयर्थ्यप्रसङ्गात्, अपिच—ज्ञेयत्वादिभिर्धर्म्मैरननुवेधात् तस्य सर्वथाऽनवगमप्रसङ्गो, 'न ह्यज्ञेयस्वभाव ज्ञातुं शक्यते' इति न्यायात्, तथा च तदभावप्रसङ्ग, कदाचिदप्यवगमाभावात्, तथापि तत्सत्त्वाभ्युपगमेऽतिप्रसङ्ग', अन्यस्यापि यस्य कस्यचित् अनवगतस्य पष्ठभूतादेर्भावापत्ते, एव च धर्म्यभावे धर्म्माणामपि ज्ञेयत्वप्रमेयत्वादीना निराश्रयत्वादभावापत्ति, नहि धर्माधाररहिता क्वापि धर्मा सम्भवन्तीति, अन्यच्च—परस्परमपि तेषा धर्माणामेकान्तेन भेदाभ्युपगमे सत्त्वाद्यभ्युपगमेऽपि सत्त्वाद्यननुवेधात् कथ भावाभ्युपगम ?, तदन्यसत्त्वादिधर्माभ्युपगमे च धर्म्मित्वप्रसक्तिरनवस्थापत्ता च, तन्नैकान्तभेदपक्षे धर्म्मिधर्म्मभावोपपत्ति, नाप्येकान्ताभेदपक्षे, यतस्तस्मिन्नभ्युपगम्यमाने धर्म्ममात्र वा स्यात् धर्म्मिमात्रं वा, अन्यथैकान्तभेदायोगात्, अन्यतराभावे चान्यतरस्याभाव, परस्परनान्तरीयकत्वात्, धर्मानन्तरीयको हि धर्म्मी धर्म्मिनान्तरीयकाश्च धर्म्मा, तत कथमेकस्याभावेऽपरस्यावस्थानमिति, कल्पितो धर्म्मधर्म्मिभावस्ततो न दूषणमिति चेत्, तर्हि वस्त्वभावप्रसङ्गः, नहि

कल्पित इति तद्भावप्रसङ्ग, धर्मा एव कल्पिता न धर्म्मी धर्म्मधर्म्मिस्वभावरहित किञ्चिद्वस्त्वस्ति, धर्म्मधर्म्मिभावश्च कल्पित इति तद्भावप्रसङ्ग, धर्मा एव कल्पिता न धर्म्मी
धर्म्मधर्म्मिस्वभावरहित किञ्चिद्वस्त्वस्ति, धर्म्मधर्म्मिभावश्च परमार्थतोऽसत्त्वाभ्युपगमाद्, तदभावे धर्म्मिणोऽ-
तत्कथमभावप्रसङ्ग इति चेन्न, धर्म्माणा कल्पनामात्रत्वाभ्युपगमेन परमार्थतोऽसत्त्वाभ्युपगमाद्, तदभावे धर्म्मिणोऽ-
प्यभावापत्ते, अथ तदेवैकं स्वलक्षण सकलसजातीयव्यावृत्त्येकस्वभावं धर्म्मि विजातीयव्यावृत्तिनिवन्धनाश्च या व्यावृत्तयो
भिन्ना इव कल्पितास्ता धर्मा:, ततो न कश्चिद्दोप', तदप्ययुक्तम्, एवं कल्पनाया वस्तुनोऽनेकान्तात्मकताप्रसक्ते., अन्यथा
सकलसजातीयविजातीयव्यावृत्त्ययोगात्, नहि येनैव स्वभावेन घटाद् व्यावर्त्तते पटस्तेनैव स्तम्भादपि, स्तम्भस्य पटरूपता-
प्रसक्ते., तथाहि-घटाद् व्यावर्त्तते पटो घटव्यावृत्तिस्वभावतया, स्तम्भादपि चेत् घटव्यावृत्तिस्वभावतयैव व्यावर्त्तते
तर्हि वलात् स्तम्भस्य घटस्वरूपताप्रसक्तिः, अन्यथा ततस्तत्स्वभावतया तद्व्यावृत्त्ययोगात्, तस्मात् यतो व्यावर्त्तते
यत् तत्तद्व्यावृत्तिनिमित्तभूताः स्वभावा अवश्यमभ्युपगन्तव्याः, ते च नैकान्तेन धर्मिणो भिन्नास्तदभावप्रसङ्गात्; तथा
च तदवस्थ एव पूर्वोक्तो दोप., तस्माद्भिन्नाभिन्नाः, भेदाभेदोऽपि धर्म्मधर्म्मिणोः कथमिति चेत्, उच्यते, इह यद्यपि
तादात्म्येन धर्म्मिणा धर्म्माः सर्वे लोलीभावेन व्याप्तास्तथाऽप्ययं धर्म्मी एते धर्म्मा इति परस्पर भेदोऽप्यस्ति, अन्यथा
तद्भावानुपपत्तिः, तथा च सति प्रतीतिवाधा, मिथो भेदेऽपि च विशिष्टान्योऽन्यानुवेधेन सर्वधर्म्माणां धर्म्मिणा व्याप्तत्वात्
अभेदोऽप्यस्ति, अन्यथा तस्य धर्म्मा इति सम्बन्धानुपपत्तिः, ततश्च न सर्वेपा वीतरागत्वप्रसङ्गः, केवलभेदस्यानभ्युपग-
मात्, नापि दोपक्षये तदात्मनोऽपि क्षयः, केवलाभेदस्यानभ्युपगमादिति न काचित् क्षति. ॥

नैरन्तर्येणाभ्यासस्तद्रूपा भावना वेदितव्या, तस्या अपि रागादिप्रतिपक्षत्वात्, नहि तत्त्ववृत्त्या सम्यग्ज्ञानाद्यभ्यासभव्या-
पृतमनस्कस्य स्त्रीशरीररामणीकादिविषय चेत'प्रवृत्तिमातनोति, तथानुपलम्भात्, यदप्युक्त 'किञ्च-रागादय आत्मनो
व्यतिरिक्ता वा भवेयुरव्यतिरिक्ता वा' इत्यादि, तदप्ययुक्तं, भेदाभेदपक्षस्य जात्यन्तरस्याभ्युपगमात्, केवलभेदाभेदपक्षे
धर्म्मधर्म्मिभावानुपपत्ते , तथाहि–धर्म्मधर्म्मिणोरेकान्तेन भेदेऽभ्युपगम्यमाने धर्म्मिणो नि स्वभावतापत्ति , स्वभाव
स्यापि धर्म्मरवात्, तस्य च ततोऽन्यत्वात्, स्व भाव' स्वभाव स्वस्यैव चात्मीया सत्ता, नतु तदर्थान्तर धर्म्मच्व,
ततो न नि स्वभावतापत्तिरिति चेत् न, इत्थ स्वरूपसत्ताभ्युपगमे तदपरसत्तासामान्ययोगकल्पनावैयर्थ्यप्रसङ्गात्, अपिच–
ज्ञेयत्वादिभिर्धर्म्मैरननुवेधात् तस्य सर्वथाऽनवगमप्रसङ्गो, 'न ह्यज्ञेयस्वभाव ज्ञातु शक्यते' इति न्यायात्, तथा च तदभा-
वप्रसङ्ग , कदाचिदप्यवगमाभावात्, तथापि तत्सत्त्वाभ्युपगमेऽतिप्रसङ्ग', अन्यस्यापि यस्य कस्यचित् अनवगतस्य पद्मभूतादे-
र्भावापत्ते , एव च धर्म्यभावे धर्म्माणामपि ज्ञेयत्वप्रमेयत्वादीना निराश्रयत्वादभावापत्ति , नहि धर्माधाररहिता क्वापि
धर्मा सम्भवन्तीति, अन्यच्च—परस्परमपि तेषा धर्माणामेकान्तेन भेदाभ्युपगमे सत्त्वाद्यभ्युपगमेऽपि सत्त्वाद्यननुवेधात्
[illegible] भावाभ्युपगम ?, तदन्यसत्त्वादिधर्माभ्युपगमे च धर्म्मित्वप्रसक्तिरनवस्थापत्ता च, तन्नैकान्तभेदपक्षे धर्म्मिधर्म्मभावो-
[illegible]प्येकान्ताभेदपक्षे, यतस्तस्मिन्नभ्युपगम्यमाने धर्म्ममात्र वा स्यात् धर्म्मिमात्र वा, अन्यथैकान्तभेदायोगात्,
[illegible]वे चान्यतरस्याभाव , परस्परनान्तरीयकत्वात्, धर्मानन्तरीयको हि धर्म्मी धर्म्मिनान्तरीयकाश्च धर्म्मा , तत
[illegible]भावेऽपरस्यावस्थानमिति, कल्पितो धर्म्मधर्म्मिभावस्ततो न दूषणमिति चेत्, तर्हि वस्त्वभावप्रसङ्ग , नहि

धर्म्मधर्म्मिस्वभावरहितं किञ्चिद्वस्त्वस्ति, धर्म्मधर्म्मिभावश्च कल्पित इति तदभावप्रसङ्ग', धर्मा एव कल्पिता न धर्म्मी तत्कथमभावप्रसङ्ग इति चेन्न, धर्म्माणा कल्पनामात्रत्वाभ्युपगमेन परमार्थतोऽसत्त्वाभ्युपगमाद्, तदभावे धर्म्मिणोऽप्यभावापत्ते', अथ तदेवैकं स्वलक्षणं सकलसजातीयव्यावृत्त्येकस्वभावं धर्म्मि विजातीयव्यावृत्तिनिबन्धनाश्च या व्यावृत्तयो भिन्ना इव कल्पितास्ता धर्मा, ततो न कश्चिद्दोषः, तदप्ययुक्तम्, एवं कल्पनाया वस्तुनोऽनेकान्तात्मकताप्रसक्तेः, अन्यथा सकलसजातीयविजातीयव्यावृत्त्ययोगात्, नहि येनैव स्वभावेन घटाद् व्यावर्त्तते पटस्तेनैव स्तम्भादपि, स्तम्भस्य पटरूपताप्रसक्तेः, तथाहि–घटाद् व्यावर्त्तते पटो घटव्यावृत्तिस्वभावतया, स्तम्भादपि चेत् घटव्यावृत्तिस्वभावतयैव व्यावर्त्तते तर्हि बलात् स्तम्भस्य घटस्वरूपताप्रसक्तिः, अन्यथा ततस्तत्स्वभावतया तद्व्यावृत्त्ययोगात्, तस्मात् यतो व्यावर्त्तते यत् तत्तद्व्यावृत्तिनिमित्तभूताः स्वभावा अवश्यमभ्युपगन्तव्याः, ते च नैकान्तेन धर्मिणो भिन्नास्तदभावप्रसङ्गात्; तथा च तदवस्थ एव पूर्वोक्तो दोषः, तस्माद्भिन्नाभिन्नाः, भेदाभेदोऽपि धर्म्मधर्म्मिणोः कथमिति चेत्, उच्यते; इह यद्यपि तादात्म्येन धर्म्मिणा धर्माः सर्वे लोलीभावेन व्याप्तास्तथाऽप्ययं धर्म्मी एते धर्मा इति परस्परं भेदोऽप्यस्ति, अन्यथा तद्भावानुपपत्तिः, तथा च सति प्रतीतिबाधा, मिथो भेदेऽपि च विशिष्टान्योऽन्यानुवेधेन सर्वधर्म्माणां धर्म्मिणा व्याप्तत्वात् अभेदोऽप्यस्ति, अन्यथा तस्य धर्मा इति सम्बन्धानुपपत्तिः, ततश्च न सर्वेषा वीतरागत्वप्रसङ्ग', केवलभेदस्यानभ्युपगमात्, नापि दोषक्षये तदात्मनोऽपि क्षयः, केवलाभेदस्यानभ्युपगमादिति न काचित् क्षतिः ॥

छिन्नंमि संसयंमी जाइजरामरणविप्पमुक्केणं । सो समणो पव्वइतो तिहिं उ सह खंडियसएहिं ॥ ६४१ ॥

व्याख्या पूर्ववत् ।

एकादशो गणधर समाप्त ॥

उक्ता गणधरसंशयापनयनवक्तव्यता, साम्प्रतमेतेषामेव वक्तव्यताशेषप्रतिपादनार्थं द्वारगाथामाह—

खित्ते काले जम्मे गुत्तमगारछउमत्थपरिआए । केवलिअ आउ आगम परिनिव्वाणे तवे चेव ॥ ६४२ ॥

अत्र एकारान्ता शब्दा प्राकृतत्वात् प्रथमाद्वितीयान्ता द्रष्टव्याः, ततोऽयमर्थ —गणधरानधिकृत्य क्षेत्रं–जनपदग्रामनगरादि वक्तव्य, जन्मभूमिर्वाच्येत्यर्थः, तथा कालो नक्षत्रचन्द्रयोगोपलक्षितो वाच्य , तथा जन्म वक्तव्य, जन्म च मातापित्रायत्तमित्यतो मातापितरौ वाच्यौ, तथा गोत्रं यत् यस्य तद्वाच्यम्, 'अगारछउमत्थपरियाए' इति पर्यायशब्द प्रत्येकमभिसम्बध्यते, अगारपर्याय –गृहस्थपर्यायो वाच्यः, तथा छद्मस्थपर्यायश्चेति, तथा केवलिपर्यायो वाच्य , सर्वायुष्कं वाच्यं, तथा आगमो वाच्यः–कस्य क आगम आसीदिति, तथा परिनिर्वाणं वाच्यं–कस्य भगवति सति परिनिर्वाणमासीत्?, कस्य वा भगवति परिनिर्वृते इति, तथा तपो वक्तव्यं–यथा कि केनापवर्गं गच्छता तप आचरितमिति, चशब्दात् सहननादि च वक्तव्यमिति, गाथासमुदायार्थ. ॥ इदानीमवयवार्थं प्रतिपाद्यते, तत्र आद्यद्वारावयवार्थाभिधित्सया प्राह—

मगहा गुब्बरगामे जाया तिन्नेव गोयमसगुत्ता । कुल्लागसन्निवेसे जाउ वियत्तो सुहम्मो अ ॥ ६४३ ॥

मोरीअसनिवेसे दो भायर मंडि–मोरिआ जाया। अयलो अ कोसलाए मिहिलाए अकंपिओ जाओ ॥६४४॥
तुगीअसनिवेसे मेअज्जो वच्छभूमिए जाओ। भगवंपि य पभासो रायगिहे गणहरो जाओ ॥ ६४५ ॥

मगधेषु जनपदेषु गोब्बरग्रामे जातास्त्रय एवाद्या गणधरा, कथम्भूता एते त्रयोऽपीत्याह—'गौतमसगोत्रा' सह गोत्र येषा ते सगोत्रा· गौतमेन गोत्रेण सगोत्रा गौतमसगोत्रा·, गौतमाभिधगोत्रयुक्ता इत्यर्थ·, तथा कोल्लाकसन्निवेशे जातोऽव्यक्तः सुधर्म्मश्च, मौर्यसन्निवेशे द्वौ भ्रातरौ मण्डिकमौर्यौ जातौ, अचलश्च कोशलाया मिथिलायामकम्पिको जात इति, तुङ्गिके सन्निवेशे वत्सभूमौ कौशाम्बीविषये इत्यर्थः, मेतार्यो जात., भगवानपि च प्रभासो राजगृहे गणधरो जात. ॥ सम्प्रति कालद्वारावयवार्थ· प्रतिपाद्य, कालश्च नक्षत्रचन्द्रयोगोपलक्षित इति यत् यस्य गणभृतां नक्षत्रं तदभिधित्सुराह—

जेट्ठा कत्तिय साईं सवणो हत्थुत्तरा महाओ अ। रोहिणि उत्तरसाढा मिगसिर तह अस्सिणी पुस्सो ॥६४६॥

इन्द्रभूतेर्जन्मनक्षत्रं ज्येष्ठा अग्निभूते· कृत्तिका· वायुभूते· स्वातिर्व्यक्तस्य श्रवण· सुधर्म्मस्य हस्त उत्तरो यासा ता हस्तोत्तरा उत्तराफाल्गुन्य इत्यर्थः, मण्डिकस्य मघाः, मौर्यस्य रोहिणी, अकम्पिकस्य उत्तराषाढाः, अचलभ्रातु· मृगशिरः, मेतार्यस्य अश्विनी, प्रभासस्य पुष्यः ॥ अधुना जन्मद्वार प्रतिपाद्य, जन्म च मातापित्रायत्तमिति गणभृता मातापितरावेव प्रतिपादयति—

वसुभूई धणमित्तो धम्मिल धणदेव मोरिए चेव। देवे वसू अ दत्ते वले अ पिअरो गणहराणं ॥ ६४७ ॥

छिन्नंमि ससयमी जाइजरामरणविप्पमुक्केणं । सो समणो पवइत्तो तिहिं उ सह खडियसएहिं ॥ ६४१ ॥

व्याख्या पूर्ववत् ।

एकादशो गणधर समाप्त ॥

उक्ता गणधरसंशयापनयनवक्तव्यता, साम्प्रतमेतेषामेव वक्तव्यताशेषप्रतिपादनार्थं द्वारगाथामाह—

खित्ते काले जम्मे गुत्तमगारछउमत्थपरिआए । केवलिअ आउ आगम परिनिव्वाणे तवे चेव ॥ ६४२ ॥

अत्र एकारान्ता· शब्दा· प्राकृतत्वात् प्रथमाद्वितीयान्ता द्रष्टव्याः, ततोऽयमर्थ —गणधरानधिकृत्य क्षेत्रं—जनपदग्रानगरादि वक्तव्य, जन्मभूमिर्वाच्येत्यर्थः, तथा कालो नक्षत्रचन्द्रयोगोपलक्षितो वाच्य·, तथा जन्म वक्तव्य, जन्म च मातापित्रायत्तमित्यतो मातापितरौ वाच्यौ, तथा गोत्रं यत् यस्य तद्वाच्यम्, 'अगारछउमत्थपरियाए' इति पर्यायशब्द· प्रत्येकमभिसम्बध्यते, अगारपर्याय —गृहस्थपर्यायो वाच्यः, तथा छद्मस्थपर्यायश्चेति, तथा केवलिपर्यायो वाच्य', सर्वायुष्कं वाच्य, तथा आगमो वाच्यः—कस्य क आगम आसीदिति, तथा परिनिर्वाणं वाच्यं—कस्य भगवति सति परिनिर्वाणमासीत्?, कस्य वा भगवति परिनिर्वृते इति, तथा तपो वक्तव्यं—यथा किं केनापवर्गं गच्छता तप आचरितमिति, चशब्दात् संहननादि च वक्तव्यमिति, गाथासमुदायार्थः ॥ इदानीमवयवार्थ· प्रतिपाद्यते, तत्र आद्यद्वारावयवार्थाभिधित्सया प्राह—

मगहा गुव्वरगामे जाया तिन्नेव गोयमसगुत्ता । कुल्लागसन्निवेसे जाउ वियत्तो सुहम्मो अ ॥ ६४३ ॥

मोरीअसनिवेसे दो भायर मंडि–मोरिआ जाया। अयलो अ कोसलाए मिहिलाए अकंपिओ जाओ ॥६४४॥
तुगीअसनिवेसे मेअज्जो वच्छभूमिए जाओ। भगवंपि य पभासो रायगिहे गणहरो जाओ ॥ ६४५ ॥

मगधेषु जनपदेषु गोब्बरग्रामे जातास्त्रय एवाद्या गणधरा', कथम्भूता एते त्रयोऽपीत्याह—'गौतमसगोत्रा' सह गोत्रं येषां ते सगोत्रा' गौतमेन गोत्रेण सगोत्रा गौतमसगोत्राः, गौतमाभिधगोत्रयुक्ता इत्यर्थः, तथा कोल्लाकसन्निवेशे जातोऽव्यक्त॰ सुधर्म्मश्च, मौर्यसन्निवेशे द्वौ भ्रातरौ मण्डिकमौर्यौ जातौ, अचलश्च कोशलाया मिथिलायामकम्पिको जात इति, तुङ्गिके सन्निवेशे वत्सभूमौ कौशाम्बीविषये इत्यर्थ', मेतार्यो जातः, भगवानपि च प्रभासो राजगृहे गणधरो जातः ॥ सम्प्रति कालद्वारावयवार्थः प्रतिपाद्यः, कालश्च नक्षत्रचन्द्रयोगोपलक्षित इति यत् यस्य गणभृतां नक्षत्रं तदभिधित्सुराह—

जेट्ठा कत्तिय साई सवणो हत्थुत्तरा महाओ अ। रोहिणि उत्तरसाढा मिगसिर तह अस्सिणी पुस्सो ॥६४६॥

इन्द्रभूतेर्जन्मनक्षत्रं ज्येष्ठा अग्निभूते' कृत्तिका' वायुभूते स्वातिर्व्यक्तस्य श्रवण' सुधर्म्मस्य हस्त उत्तरो यासां ता हस्तोत्तरा उत्तराफाल्गुन्य इत्यर्थः, मण्डिकस्य मघाः, मौर्यस्य रोहिणी, अकम्पिकस्य उत्तराषाढाः, अचलभ्रातुः मृगशिरः, मेतार्यस्य अश्विनी, प्रभासस्य पुष्यः ॥ अधुना जन्मद्वारं प्रतिपाद्य, जन्म च मातापित्रायत्तमिति गणभृतां मातापितरावेव प्रतिपादयति—

वसुभूई धणमित्तो धम्मिल धणदेव मोरिए चेव। देवे वसू अ दत्ते बले अ पिअरो गणहराणं ॥ ६४७ ॥

आद्याना त्रयाणा गणभृता पिता वसुभूति', व्यक्तस्य धनमित्र', सुधर्म्मस्य धम्मिल्ल', मण्डिकस्य धनदेव', मौर्यस्य मौर्यः, अकम्पिकस्य देव , अचलभ्रातुर्वसु , मेतार्यस्य दत्त , प्रभासस्य वल , एव पितरो गणधराणा भवन्ति ॥

पुहवी अ वारुणी भद्दिला य विजयदेवा तहा जयंती य । नंदा य वरुणदेवा अईभद्दा य मायरो ॥ ६४८ ॥

आद्याना त्रयाणा गणभृता माता पृथिवी, व्यक्तस्य वारुणी, सुधर्म्मस्य भद्रिला, मण्डिकमौर्यपुत्राणां विजयदेवा पितृभेदेन, धनदेवे पञ्चत्वमुपागते मण्डिकपुत्रसहिता मौर्येण धृता, ततो मौर्यो जातः, अविरोधश्च तस्मिन् देशे इत्यदूपणं, जयन्ती माता अकम्पिकस्य, नन्दा अचलभ्रातु', वरुणदेवा मेतार्यस्य अतिभद्रा प्रभासस्य ॥ सम्प्रति गोत्रद्वाराभिधानार्थमाह—

तिन्नि य गोयमगुत्ता भारद्दा अग्गिवेस वासिट्ठा । कासव गोअम हारिअ कोडिन्नदुगं च गुत्ताइं ॥ ६४९ ॥

त्रय आद्या गणभृतो गौतमगोत्रा , भारद्वाजो व्यक्तः, अग्निवेश्यायन सुधर्म , वासिष्ठो मण्डिक , काश्यपो मौर्यिकः, गौतमोऽकम्पिक , हारितोऽचलभ्राता, कौण्डिन्यौ मेतार्य प्रभासश्च ॥ अधुना अगारपर्यायद्वारप्रतिपादनार्थमाह—

पन्ना छायालीसा बायाला होइ पन्न पन्ना य । तेवन्न पंचसट्ठी अडयालीसा य छायाला ॥ ६५० ॥

छत्तीसा सोलसगं अगारवासो भवे गणहराणं । छउमत्थं परियागं अहक्कमं कित्तइस्सामि ॥ ६५१ ॥

इन्द्रभूतेरगारपर्याय· पञ्चाशद्वर्षाणि, अग्निभूते षट्चत्वारिंशद्, वायुभूतेर्द्वाचत्वारिंशत्, व्यक्तस्य पञ्चाशत्, सुधर्मणः

पञ्चाशत्, मण्डिकस्य पञ्चषष्टिः, मौर्यस्य त्रिपञ्चाशत्, अकम्पितस्याष्टाचत्वारिंशत्, अचलभ्रातु॰ षट्चत्वारिंशत्, मेतार्यस्य षट्त्रिंशत्, प्रभासस्य षोडश । अत ऊर्ध्वं छद्मस्थपर्यायं यथाक्रमं कीर्त्तयिष्यामि ॥ प्रतिज्ञातमेवाह—

तीसा वारस दसगं बारस बायाल चउदसदुगं च । नवगं बारस दस अट्ठगं च छउमत्थपरिआओ ॥ ६५२ ॥

इन्द्रभूतेश्छद्मस्थपर्यायस्त्रिंशद्वर्षाणि, अग्निभूतेर्द्वादश वायुभूतेर्वर्षदशकं व्यक्तस्य द्वादश सुधर्म्मणो द्वाचत्वारिंशत् मण्डिकस्य चतुर्दश मौर्यस्यापि चतुर्दश अकम्पितस्य वर्षनवक अचलभ्रातुर्द्वादश वर्षाणि मेतार्यस्य दश प्रभासस्य वर्षाष्टकमेषामेव यथाक्रमं छद्मस्थपर्यायः ॥ केवलिपर्यायपरिज्ञानोपायमाह—

छउमत्थप्परियागं अगारवासं च वुक्कसित्ताणं । सव्वाउअस्स सेसं जिणपरियागं वियाणाहि ॥ ६५३ ॥

वारस सोलस अट्ठारसेव अट्ठारसेव अट्ठेव । सोलस सोलस इगवीस चउदस सोले अ सोले अ ॥६५४॥

छद्मस्थपर्यायमगारवास च व्यवकलय्य यत् सर्वायुष्कस्य शेषं तत् जिनपर्यायं विजानीहि; स चायं जिनपर्यायः, इन्द्रभूते॰ केवलिपर्यायो द्वादश वर्षाणि, अग्निभूतेः षोडश, वायुभूतेरष्टादश, व्यक्तस्याष्टादश, सुधर्मणोऽष्टौ, मण्डिकस्य षोडश, मौर्यपुत्रस्य षोडश, अकम्पितस्य एकविंशतिः, अचलभ्रातुश्चतुर्दश, मेतार्यस्य षोडश, प्रभासस्य षोडश ॥ सम्प्रति सर्वायुष्कमाह—

बाणउई चउहत्तरि सत्तरि तत्तो भवे असीई य । एगं च सयं तत्तो तेसीई पंचनउई आ ॥ ६५५ ॥

अट्ठत्तरिं च वासा तत्तो बावत्तरिं च वासाइं । बावट्ठी चत्ता खलु सव्वगणहराउअं एअं ॥ ६५६ ॥

आद्यानां त्रयाणां गणभृतां पिता वसुभूतिः, व्यक्तस्य धनमित्र', सुधर्मस्य धम्मिल', मण्डिकस्य धनदेवः, मौर्यस्य मौर्यः, अकम्पिकस्य देव , अचलभ्रातुर्वसु , मेतार्यस्य दत्त , प्रभासस्य वल , एव पितरो गणधराणां भवन्ति ॥

पुहवी अ वारुणी भद्दिला य विजयदेवा तहा जयंती य । नंदा य वरुणदेवा अईभद्दा य मायरो ॥ ६४८ ॥

आद्यानां त्रयाणां गणभृतां माता पृथिवी, व्यक्तस्य वारुणी, सुधर्म्मस्य भद्रिला, मण्डिकमौर्यपुत्राणां विजयदेवा पितृभेदेन, धनदेवे पञ्चत्वमुपागते मण्डिकपुत्रसहिता मौर्येण धृता, ततो मौर्यो जात', अविरोधश्च तस्मिन् देशे इत्यदूषणं, जयन्ती माता अकम्पिकस्य, नन्दा अचलभ्रातु', वरुणदेवा मेतार्यस्य अतिभद्रा प्रभासस्य ॥ सम्प्रति गोत्रद्वाराभिधानार्थमाह—

तिन्नि य गोयमगुत्ता भारद्दा अग्गिवेस वासिट्ठा । कासव गोअम हारिअ कोडिन्नदुगं च गुत्ताइं ॥ ६४९ ॥

त्रय आद्या गणभृतो गौतमगोत्रा', भारद्वाजो व्यक्तः, अग्निवेश्यायनः सुधर्म', वासिष्ठो मण्डिक', काश्यपो मौर्यिकः, गौतमोऽकम्पिकः, हारितोऽचलभ्राता, कौण्डिन्यौ मेतार्य' प्रभासश्च ॥ अधुना अगारपर्यायद्वारप्रतिपादनार्थमाह—

पन्ना छायालीसा बायाला होइ पन्न पन्ना य । तेवन्न पंचसट्ठी अडयालीसा य छायाला ॥ ६५० ॥

छत्तीसा सोलसगं अगारवासो भवे गणहराणं । छउमत्थ परियागं अहक्कमं कित्तइस्सामि ॥ ६५१ ॥

इन्द्रभूतेरगारपर्याय पञ्चाशद्वर्षाणि, अग्निभूते षट्चत्वारिंशद्, वायुभूतेर्द्वाचत्वारिंशत, व्यक्तस्य पञ्चाशत, सुधर्मणः

वज्जरिसहसंघयणा समचउरसा य संठाणे ॥ ६५९ ॥

मास पाओवगया सव्वेऽवि य सव्वलद्धिसंपन्ना । वज्जरिसहसंघयणा समचउरसा य संठाणे ॥ ६५९ ॥ सर्वेऽपि सर्वलब्धिसम्पन्नाः— सर्व एव गणधरा मास यावत् पादपोपगमनगता , द्वारगाथोपन्यस्त चशब्दार्थमाह—सर्वेऽपि सर्वलब्धिसम्पन्नाः— आमर्पोपध्याद्यशेपलब्धिसम्पन्ना , तथा वज्रर्षभसहनना समचतुरस्राश्च सस्थाने—सस्थानविपये ॥ उक्त सामायिका- र्थसूत्रप्रणेतृणा तीर्थकरगणधराणा निर्गमः, सम्प्रति क्षेत्रद्वार प्राप्तावसर, परमनन्तरमेव द्रव्यनिर्गमस्य प्रतिपादितत्वात् कालस्य च द्रव्यपर्यायत्वेनान्तरङ्गत्वाद् अन्तरङ्गवहिरङ्गयोश्चान्तरङ्ग एव विधिर्वलवानिति न्यायसामर्थ्यात् क्षेत्रद्वार- मुच्यते, द्वारगाथाया तु क्षेत्रस्याल्पवक्तव्यत्वात् प्रथममुपन्यास' कृत , तत्र कालो नामाद्येकादशभेदभिन्नः, तत्र नामस्थापने सुज्ञाने इति ते अनादृत्य द्रव्यादिकालप्रतिपादनार्थमाह—

दव्वे अद्ध अहाउअ उवक्कमे देस कालकाले य । तह य पमाणं वन्ने भावे पगयं तु भावेणं ॥ ६६० ॥

तत्र द्रव्य इति वर्त्तनादिलक्षणो द्रव्यकालो वाच्य', 'अद्धा' इति चन्द्रसूर्यादिक्रियाविशिष्टोऽर्द्धतृतीयद्वीपसमुद्रान्त- वर्ती समयादिलक्षणो अद्धाकालो वाच्य', तथा आयुष्ककालो देवाद्यायुष्कलक्षणो वाच्यः, तथा उपक्रमकाल अभि- प्रेतार्थसामीप्यानयनलक्षण. सामाचारीयथायुष्कभेदभिन्नो वाच्यः, तथा देशकालो वाच्यः, देश प्रस्तावोऽवसरो विभाग पर्याय इत्यनर्थान्तर तस्य कालो देशकाल., अभीष्टवस्त्ववाप्त्यवसरकाल इति भाव , तथा कालकालो वाच्यः, तत्र कलन काल', द्वितीय कालशब्दो मरणवाची, कालस्य कालः कालकालो, मरणक्रियाकलनमित्यर्थ', च. समुच्चये, तथा प्रमाणकाल.-अद्धाकालविशेपो दिवसादिलक्षणो वाच्य', तथा वर्णकालो वाच्यः; वर्णश्चासौ कालश्चेति वर्णकाल', तथा

इन्द्रभूते सर्वायुर्द्विनवतिर्वर्षाणि, अग्निभूतेश्चतु सप्तति , वायुभूते सप्तति , व्यक्तस्य अशीति', सुधर्मस्य एक वर्षशत, मण्डिकस्य पञ्चनवतिर्वर्षाणि, मौर्यपुत्रस्य त्र्यशीति , अकम्पिकस्याष्टसप्तति , अचलभ्रातुर्द्वासप्तति , मेतार्यस्य द्वाषष्टि', प्रभासस्य चत्वारिंशत्, एव क्रमेण गणधराणा सर्वायुष्कमिति ॥ आगमद्वारप्रतिपादनार्थमाह—

सव्वे य माहणा जच्चा, सव्वे अज्झावया विऊ। सव्वे दुवालसंगीआ, सव्वे चउदसपुव्विणो ॥ ६५७ ॥

सर्वे ब्राह्मणा जात्या —प्रशस्तजातिकुलोत्पन्ना , तथा सर्वेऽध्यापका–उपाध्याया विदन्तीति विदो—विद्वास , चतुर्दशविद्यास्थानपारगमनात्, तानि चतुर्दश विद्यास्थानान्यमूनि—"अङ्गानि वेदाश्चत्वारो, मीमासा न्यायविस्तर । धर्मशास्त्र पुराण च, विद्या ह्येताश्चतुर्दश ॥ १ ॥" तत्राङ्गानि षड्, तद्यथा—शिक्षा कल्पो व्याकरण निरुक्त छन्दो ज्योतिषं चेति, एष गृहस्थागम उक्त , लोकोत्तरागमप्रतिपादनार्थमाह—सर्वे द्वादशाङ्गिन , तत्र स्वल्पेनापि द्वादशाङ्गाध्ययनेन द्वादशाङ्गिनोऽभिधीयन्ते तत सम्पूर्णद्वादशाङ्गज्ञापनार्थमाह—सर्वे चतुर्दशपूर्विण ॥ परिनिर्वाणद्वारमाह—

परिनिव्वुया गणहरा जीवंते नायए नव जणा उ। इंदभूई सुहम्मो अ रायगिहे निव्वुए वीरे ॥ ६५८ ॥

जीवति ज्ञातके—ज्ञातकुलोत्पन्ने वीरे भगवति नव जना—इन्द्रभूतिसुधर्मस्वामिवर्ज्जा परिनिर्वृता , इन्द्रभूति सुधर्मश्च स्वामिनि वीरे निर्वृते परिनिर्वृत , तत्रापि प्रथममिन्द्रभूति पश्चात्सुधर्मस्वामी, यश्च यश्च काल करोति स स सुधर्मस्वामिनो गणं ददाति, तेषा तथाविधसन्तानप्रवृत्तिहेतुभूताचार्यासम्भवात्, सुधर्मस्वामी तु काल कुर्वन् निजशिष्याय जम्बूस्वामिने गण समर्पितवान् ॥ अधुना तपोद्वारमाह—

मास पाओवगया सव्वेऽवि य सव्वलद्धिसपन्ना । वज्जरिसहसंघयणा समचउरसा य संठाणे ॥ ६५९ ॥

सर्व एव गणधरा मास यावत् पादपोपगमनगता', द्वारगाथोपन्यस्त चशब्दार्थमाह—सर्वेऽपि सर्वलब्धिसम्पन्ना'—आमर्षौषध्याद्यशेषलब्धिसम्पन्ना , तथा वज्रर्षभसहनना समचतुरस्राश्च सस्थाने—सस्थानविषये ॥ उक्त' सामायिकार्थसूत्रप्रणेतृणा तीर्थकरगणधराणा निर्गम , सम्प्रति क्षेत्रद्वार प्राप्तावसर, परमनन्तरमेव द्रव्यनिर्गमस्य प्रतिपादितत्वात् कालस्य च द्रव्यपर्यायत्वेनान्तरङ्गत्वाद् अन्तरङ्गबहिरङ्गयोश्चान्तरङ्ग एव विधिर्बलवानिति न्यायसामर्थ्यात् क्षेत्रद्वारमुच्यते, द्वारगाथाया तु क्षेत्रस्याल्पवक्तव्यत्वात् प्रथममुपन्यास. कृत', तत्र कालो नामाद्येकादशभेदभिन्नः, तत्र नामस्थापने सुज्ञाने इति ते अनादृत्य द्रव्यादिकालप्रतिपादनार्थमाह—

दव्वे अद्ध अहाउअ उवक्कमे देस कालकाले य । तह य पमाणं वन्ने भावे पगयं तु भावेणं ॥ ६६० ॥

तत्र द्रव्य इति वर्त्तनादिलक्षणो द्रव्यकालो वाच्य., 'अद्धा' इति चन्द्रसूर्यादिक्रियाविशिष्टोऽर्द्धतृतीयद्वीपसमुद्रान्तर्वर्ती समयादिलक्षणो अद्धाकालो वाच्य., तथा आयुष्ककालो देवाद्यायुष्कलक्षणो वाच्यः, तथा उपक्रमकाल' अभिप्रेतार्थसामीप्यानयनलक्षण सामाचारीयथायुष्कभेदभिन्नो वाच्यः, तथा देशकालो वाच्य', देश. प्रस्तावोऽवसरो विभाग' पर्याय इत्यनर्थान्तर तस्य कालो देशकाल , अभीष्टवस्त्ववाप्त्यवसरकाल इति भावः, तथा कालकालो वाच्य', तत्र कलन काल', द्वितीय कालशब्दो मरणवाची, कालस्य कालः कालकालो, मरणक्रियाकलनमित्यर्थः, च. समुच्चये, तथा प्रमाणकाल –अद्धाकालविशेषो दिवसादिलक्षणो वाच्य., तथा वर्णकालो वाच्यः, वर्णश्चासौ कालश्चेति वर्णकाल , तथा

वइसाहसुद्धइक्कारसीइ पुव्वण्हदेसकालम्मि । महसेणवणुज्जाणे अणंतर परपरं सेसं ॥ ७३४ ॥

वैशाखे मासि शुद्धे-शुक्लपक्षे एकादश्या पूर्वाह्णदेशकाले, प्रथमपौरुष्यामित्यर्थ, कालस्यान्तरङ्गत्वख्यापनार्थमेव प्रश्नव्यत्ययेन निर्देश, महासेनवनोद्याने क्षेत्रेऽनन्तरनिर्गम सामायिकस्य, 'परपर सेस'ति शेष-गुणशिलकाद्युद्यानादि क्षेत्रजातमधिकृत्य परम्पर निर्गमनं सामायिकस्य, उक्तं च भाष्यकृता—"खेत्ते महसेणवणोवलक्खिय जत्थ निग्गयं पुधं । सामाइयमन्नेसु उ परपरविणिग्गमो तस्स ॥ १ ॥" गतं मूलद्वारगाथाद्वयप्रतिबद्ध क्षेत्रद्वारम्, इह च क्षेत्रकालपुरुषद्वाराणा निर्गमाङ्गतैव प्राक्, ततश्च निर्गमद्वारव्याचिख्यासया "नामं ठवणादविए खेत्ते काले तहेव भावे य । एसो उ निग्गमस्सा निक्खेवो छव्विहो होइ ॥ १ ॥" त्ति येयं गाथोपन्यस्ता तस्या क्षेत्रकालनिर्गमावुक्तौ, अथ भावनिर्गमप्रतिपादनार्थमाह—

खइयम्मि वट्टमाणस्स निग्गयं भगवओ जिणिंदस्स । भावे खओवसमिअम्मि वट्टमाणेहि तं गहिअं ॥ १३५ ॥

क्षायिके भावे वर्त्तमानस्य भगवतो जिनेन्द्रस्य-श्रीमन्महावीरस्य सकाशाद् विनिर्गत सामायिक, भावशब्द उभयत्रापि सम्बध्यते, भावे क्षायोपशमिके वर्त्तमानैस्तत्सामयिकमन्यच्च श्रुतं गृहीतं, गणधरादिभिरिति गम्यते, तत्र भगवता गौतमस्वामिना निषद्यात्रयेण चतुर्दश पूर्वाणि गृहीतानि, प्रणिपत्य पृच्छा निषद्योच्यते, भगवान् वर्द्धमानस्वाम्युक्तवान्—'उप्पन्नेइ वा विगमेइ वा धुवेइ वा' उत्पन्न इति-उत्पत्तिस्वभावः विगम इति-विनाशधर्मा इति भाव', ध्रुव इति-स्थितिधर्म्मा, एता एव तिस्रो गणभृता निषद्या, तथाहि-एतासामेव सकाशात् उत्पादव्ययध्रौव्ययुक्त सदिति गणभृता प्रतीतिरुपजायते, अन्यथा सत्ताया अनुपपत्तेरिति, ततस्ते पूर्वभवभावितमतयो द्वादशाङ्गमुपरचयन्ति, ततो भयव अणुण्णं मणसी करेंति,

॥ १ ॥ सम्मत्तचरित्ताइ साईसतो य ओवसमिओ य । दाणाइलद्धिपणग चरणं चिय साइओ भावो ॥ २ ॥ सम्मत्तनाणद- सणसिद्धत्ताइ तु साइओऽणतो । नाण केवलवज्ज साईसतो खओवसमो ॥३॥ मइअन्नाणाईया भवाभवाण तइयचरमोऽयं । सव्वो पोग्गलधम्मो पढमो परिणामिओ होइ ॥ ४ ॥ भवत्त पुण तइओ जीवाभवाइ चरमभंगो उ । भावाणमयं कालो (त्रि २०७७-८१) इति ॥

एत्थ पुण अहिगारो पमाणकालेण होइ नायव्वो । खेत्तम्मि कंमि कालम्मि भासिय जिणवरिंदेण ? ॥ ७२३ ॥

अत्र पुन -अनेकविधकालप्ररूपणायामधिकार -प्रयोजन प्रमाणकालेन भवति ज्ञातव्य , आह-'दये अद्ध अहाउय' इत्यादिद्वारगाथायामिदमुक्तम् 'पगय तु भावेण'ति, सम्प्रति पुनरेवमुक्तम्-'अत्र पुनरधिकारः प्रमाणकालेन भवति ज्ञातव्य इत्युक्त', तत कथ न पूर्वापरविरोध ?, उच्यते, क्षायिकभावकाले वर्त्तमानेन भगवता सामायिकमध्ययनं भापितमिति चेतसि परिभाव्य प्रागिदमुक्तं-'पगय तु भावेण'मिति, तथा पूर्वाह्णकाललक्षणे प्रमाणकाले च भगवता भापितं सामायिकमिति तद्विवक्षायामत्रोक्त प्रमाणकालेनाधिकार इति, तत उभयसङ्ग्रहपर पूर्वमिदं च वाक्यमित्यदोप अथवा प्रमाणकालोऽप्यद्धाकालपर्यायत्वात् भावकाल एवेत्यविरोध. ॥ तदेवं 'उद्देसे निद्देसे य निग्गमे' इत्युपोद्घातनिर्युक्तिप्रतिवद्धद्वारगाथाद्वयस्य व्याख्यात कालद्वारम्, अधुना यत्र क्षेत्रे भापित सामायिकं तदजानन् प्रमाणकालस्य चानेकरूपत्वात्तद्विशेपमजानानो गाथापश्चार्द्धमाह चोदक.-'खेत्तम्मि' इत्यादि, कस्मिन् वा काले प्रमाणकाले पूर्वाह्णे पराह्णे वा । एव चोदकप्रश्नानन्तरमुत्तरमाह—

वइसाहसुद्धइक्कारसीइ पुव्वण्हदेसकालम्मि । महसेणवणुज्जाणे अणंतर परपरं सेस ॥ ७३४ ॥

वैशाखे मासि शुद्धे-शुक्लपक्षे एकादश्या पूर्वाह्णदेशकाले, प्रथमपौरुष्यामित्यर्थ, कालस्यान्तरङ्गत्वख्यापनार्थमेव प्रश्नव्यत्ययेन निर्देशः, महासेनवनोद्याने क्षेत्रेऽनन्तरनिर्गमः सामायिकस्य, 'परपर सेस'त्ति शेष-गुणशिलकाद्युद्यानादि क्षेत्रजातमधिकृत्य परम्पर निर्गमनं सामायिकस्य, उक्त च भाष्यकृता—"खेत्ते महसेणवणोवलक्खिय जत्थ निग्गयं पुव्वं । सामाइयमन्नेसु उ परपरविणिग्गमो तस्स ॥ १ ॥" गतं मूलद्वारगाथाद्वयप्रतिबद्ध क्षेत्रद्वारम्, इह च क्षेत्रकालपुरुषद्वाराणा निर्गमाङ्गतैव प्राक्, ततश्च निर्गमद्वारव्याचिख्यासया "नामं ठवणादविए खेत्ते काले तहेव भावे य । एसो उ निग्गमस्सा निक्खेवो छव्विहो होइ ॥ १ ॥" त्ति येयं गाथोपन्यस्ता तस्या क्षेत्रकालनिर्गमावुक्तौ, अथ भावनिर्गमप्रतिपादनार्थमाह—

खइयम्मि वट्टमाणस्स निग्गयं भगवओ जिणिंदस्स । भावे खओवसमिअम्मि वट्टमाणेहि तं गहिअं ॥ १३५ ॥

क्षायिके भावे वर्त्तमानस्य भगवतो जिनेन्द्रस्य-श्रीमन्महावीरस्य सकाशाद् विनिर्गत सामायिक, भावशब्द उभयत्रापि सम्बध्यते, भावे क्षायोपशमिके वर्त्तमानैस्तत्सामयिकमन्यच्च श्रुतं गृहीतं, गणधरादिभिरिति गम्यते, तत्र भगवता गौतमस्वामिना निषद्यात्रयेण चतुर्दश पूर्वाणि गृहीतानि, प्रणिपत्य पृच्छा निषद्योच्यते, भगवान् वर्द्धमानस्वाम्युक्तवान्-'उप्पन्नेइ वा विगमेइ वा धुवेइ वा' उत्पन्न इति-उत्पत्तिस्वभावः विगम इति-विनाशधर्मा इति भाव', ध्रुव इति-स्थितिधर्म्मा, एता एव तिस्रो गणभृता निषद्या, तथाहि-एतासामेव सकाशात् उत्पादव्ययध्रौव्ययुक्त सदिति गणभृता प्रतीतिरुपजायते, अन्यथा सत्ताया अनुपपत्तेरिति, ततस्ते पूर्वभवभावितमतयो द्वादशाङ्गमुपरचयन्ति, ततो भयवं अणुण्णं मणसी करेंति,

१ ॥ सम्मत्तचरित्ताइ साईसतो य ओवसमिओ य । दाणाइलद्धिपणग चरण चिय साइओ भावो ॥ २॥ सम्मत्तनाणदं-
णसिद्धत्ताइ तु साइओऽणतो । नाण केवलवज्ज साईसतो खओवसमो ॥३॥ मइअन्नाणाईया भवाभवाण तइयचरमोऽय ।
वो पोग्गलधम्मो पढमो परिणामिओ होइ ॥ ४ ॥ भवत्त पुण तइओ जीवाभयाइ चरमभंगो उ । भावाणमय कालो
वि २०७७–८१) इति ॥

एत्थ पुण अहिगारो पमाणकालेण होइ नायव्वो । खेत्तम्मि कंमि कालम्मि भासिय जिणवरिंदेण ? ॥ ७३३ ॥

अत्र पुन –अनेकविधकालप्ररूपणायामधिकार –प्रयोजन प्रमाणकालेन भवति ज्ञातव्य , आह–'दवे अद्ध अहाउय' इत्यादिद्वारगाथायामिदमुक्तम् 'पगय तु भावेण'ति, सम्प्रति पुनरेवमुक्तम्–'अत्र पुनरधिकारः प्रमाणकालेन भवति ज्ञातव्य इत्युक्त', तत कथ न पूर्वापरविरोध. ?, उच्यते, क्षायिकभावकाले वर्त्तमानेन भगवता सामायिकमध्ययनं भाषि-तमिति चेतसि परिभाव्य प्रागिदमुक्त–'पगय तु भावेण'मिति, तथा पूर्वाह्नकाललक्षणे प्रमाणकाले च भगवता भाषितं सामायिकमिति तद्विवक्षायामत्रोक्त प्रमाणकालेनाधिकार इति, तत उभयसङ्ग्रहपर पूर्वमिद च वाक्यमित्यदोष अथवा प्रमाणकालोऽप्यद्धाकालपर्यायत्वात् भावकाल एवेत्यविरोध ॥ तदेव 'उद्देसे निद्देसे य निग्गमे' इत्युपोद्घातनिर्युक्तिप्रति-बद्धद्वारगाथाद्वयस्य व्याख्यातं कालद्वारम्, अधुना यत्र क्षेत्रे भाषित सामायिकं तदजानन् प्रमाणकालस्य चानेकरूपत्वा-त्तद्विशेषमजानानो गाथापश्चार्द्धमाह चोदक.–'खेत्तम्मि' इत्यादि, कस्मिन् वा काले प्रमाणकाले पूर्वाह्णे पराह्णे वा । एवं चोदकप्रश्नानन्तरमुत्तरमाह—

ताहे सक्को दिव्व वइरामय थाल दिव्वचुण्णाण भरेऊण सामिमुवागच्छइ, ताहे सामी सीहासणातो उट्ठित्ता पडिपुण्णं मुट्ठिं केसराण गेण्हइ, ताहे गोयमसामिप्पमुहा एक्कारसवि गणहरा ईसिओणया परिवाडीए ठायति, ताहे देवा आतोज्जगीय-सद्द निरुंभति, ताहे सामी पुव्व गोयमसामिस्स तित्थ दव्वेहिं गुणेहिं पज्जवेहि य अणुजाणामित्ति भणइ, चुण्णाणि य सीसे छुभइ, ततो देवावि चुण्णवास पुप्फवास उवरि वासति, गण च सुहम्मसामिस्स धुरे ठावित्ता अणुजाणइ, एवं सामाइयस्स अत्थो भयवतो निग्गतो, सुत्त गणहरेहितो निग्गयमित्यल विस्तरेण ॥ सम्प्रति पुरुषद्वारप्रतिपादनार्थमाह—

दव्वाऽभिलावचिंधे वेए धम्मत्थभोग भावे अ। भावपुरिसो उ जीवो भावे पगयं तु भावेण ॥ १३३ ॥

इह नामस्थापनापुरुषौ सुप्रतीतत्वान्नोक्तौ, 'दव्वत्ति' द्रव्यपुरुष', स द्विधा—आगमतो नोआगमतश्च, तत्रागमत पुरुष-पदार्थज्ञस्तत्र चानुपयुक्त, 'अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतो ज्ञशरीरभव्यशरीरपुरुषौ सुप्रतीतौ, ज्ञशरीरभव्य-शरीरव्यतिरिक्तस्त्रिधा, तद्यथा—एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च, तत्र एकेन भवेन पुरुषो भावी स एकभविक, एष पूर्वस्मिन् भवे अवद्धपुरुषायुरपि प्रथमदिवसादारभ्य प्रोच्यते, बद्धायुष्को नाम पूर्वभव एव वर्त्तमानो निबद्धपुरुषायुष्क-, अभिमुखनामगोत्रोऽन्तर्मुहूर्त्तमात्रव्यवधानेनोदयमधिकृत्य पुरुषायुर्नामगोत्र', अथवा ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्य-पुरुषो द्विधा—मूलगुणनिर्मित उत्तरगुणनिर्मितश्च, तत्र मूलगुणनिर्मित. पुरुषप्रायोग्याणि द्रव्याणि, उत्तरगुणनिर्मितस्तु तान्येव तदाकारवन्तीति, तथाऽभिलप्यते तेनेत्यभिलाप.—शब्दस्तत्राभिलापपुरुष पुंलिङ्गाभिधानमात्र घट पट इति, चिन्हे—चिन्हविषयः पुरुष.—अपुरुषोऽपि पुरुषचिन्होपलक्षितो, यथा नपुंसक श्मश्रुचिन्हमित्यादि, तथा त्रिष्वपि लिङ्गेषु स्त्रीपुनपु-

सकेषु वर्त्तमान' प्राणी तृणज्वालोपमवेदानुभवकाले वेदपुरुष स्त्यादिरप्युच्यते, तथा धर्मार्जनव्यापारपर' साधुर्धर्मपुरुषः, अर्थार्जनव्यापारपरस्त्वर्थपुरुष. मम्मणवणिग्वत्, भोगपुरुष सम्प्राप्तसमस्तविषयसुखभोगोपभोगसमर्थश्चक्रवर्तिवत्, 'भावे य'त्ति भावपुरुष', चशब्दो नामाद्यनुक्तभेदसमुच्चयार्थ', 'भावपुरिसो उ जीवो भावे'त्ति पू'-शरीर पुरि शेते इति निरुक्तवशात् भावपुरुषो जीव , 'भावे'त्ति भावद्वारे निरूप्यमाणे, भावचिन्तायामिति भाव , अथवा भावे इति भावनिर्गमप्ररूपणायामधिकृताया, कि ?-'पगयं तु भावेणं'ति प्रकृतम्-उपयोगस्तु भावेन पदैकदेशे पदसमुदायोपचारात भावपुरुषेण शुद्धेन जीवेन, तीर्थकरेणेत्यर्थ , तुशब्दाद्वेदपुरुषेण च गणधरेण, यतोऽर्थतस्तीर्थकराद्विनिर्गतं सूत्रतो गणधरेभ्य इति, एवमन्येऽपि यथासम्भव पुरुषा आयोज्या. ॥ गत पुरुषद्वारम् । साम्प्रतं कारणद्वार व्याचिख्यासुराह—

निक्खेवु कारणम्मी चउविहो दुविह होइ दव्वम्मि । तद्दवमन्नदव्वे अहवावि निमित्तनेमित्ती ॥ ७३७ ॥

करोति-निर्वर्त्तयति कार्यमिति कारणं तस्मिन् कारणे-कारणविषयो निक्षेपो-न्यासः चतुर्विधः-चतुर्भेद', तद्यथा-नामकारणं स्थापनाकारण द्रव्यकारण भावकारण च, तत्र नामस्थापने सुज्ञाने, द्रव्यकारण ज्ञशरीरभव्यशरीरव्यतिरिक्त द्विधा, तथा च द्विविधो भवति द्रव्ये, निक्षेप इति वर्त्तते, किमुक्त भवति ?-ज्ञशरीरभव्यशरीरव्यतिरिक्तद्रव्यकारणविषयो निक्षेपो द्विधेति, तदेव द्वैविध्य दर्शयति-'तद्दवमन्नदवे' इति तद्द्रव्यकारणमन्यद्रव्यकारणं च, तस्यैव पटादेः द्रव्यं-तन्त्वादि तदेव कारणं तद्द्रव्यकारणं, वेमाद्यन्यद्रव्यकारणं, अथवा अन्यथा व्यतिरिक्तकारणद्वैविध्य-'निमित्तनैमित्तं' निमित्तकारणं नैमित्तिकारणं चेत्यर्थः, अपिशब्दादन्यथापि कारणनानाता ता वक्ष्यामि, तत्र पटस्य निमित्तं तन्तवस्त एव कारणं निमित्त-

ाहे सक्को दिव वइरामय थाल दिव्वचुण्णाण भरेऊण सामिमुनागच्छइ, ताहे सामी सीहासणातो उट्ठित्ता पडिपुण्ण मुट्ठि
ऽसराण गेण्हइ, ताहे गोयमसामिप्पमुहा एक्कारसवि गणहरा ईसिओणया परिवाडीए ठायंति, ताहे देवा आतोज्जगीय-
ाइ निरुंभंति, ताहे सामी पुव्व गोयमसामिस्स तित्थ दव्वेहिं गुणेहिं पज्जवेहि य अणुजाणामित्ति भणइ, चुण्णाणि य सीसे
छुहइ, ततो देवावि चुण्णवास पुप्फवास उवरि वासंति, गण च सुहम्मसामिस्स धुरे ठावित्ता अणुजाणइ, एवं सामाइयस्स
अत्थो भयवतो निग्गतो, सुत्त गणहरेहितो निग्गयमित्यल विस्तरेण ॥ सम्प्रति पुरुषद्वारप्रतिपादनार्थमाह—

दव्वाऽभिलावचिंधे वेए धम्मत्थभोग भावे अ । भावपुरिसो उ जीवो भावे पगयं तु भावेण ॥ १३३ ॥

इह नामस्थापनापुरुषौ सुप्रतीतत्वान्नोक्तौ, 'दव्वत्ति' द्रव्यपुरुष , स द्विधा—आगमतो नोआगमतश्च, तत्रागमत· पुरुष-
पदार्थज्ञस्तत्र चानुपयुक्त , 'अनुपयोगो द्रव्य'मिति वचनात्, नोआगमतो ज्ञशरीरभव्यशरीरपुरुषौ सुप्रतीतौ, ज्ञशरीरभव्य-
शरीरव्यतिरिक्तस्त्रिधा, तद्यथा—एकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्च, तत्र एकेन भवेन पुरुषो भावी स एकभविक ,
स एव पूर्वस्मिन् भवे अबद्धपुरुषायुरपि प्रथमदिवसादारभ्य प्रोच्यते, बद्धायुष्को नाम पूर्वभव एव वर्त्तमानो निबद्धपुरुषायुष्क -
अभिमुखनामगोत्रोऽन्तर्मुहूर्त्तमात्रव्यवधानेनोदयमधिकृत्य पुरुषायुर्नामगोत्रः, अथवा ज्ञशरीरभव्यशरीरव्यतिरिक्तो द्रव्य-
पुरुषो द्विधा—मूलगुणनिर्मित उत्तरगुणनिर्मितश्च, तत्र मूलगुणनिर्मित· पुरुषप्रायोग्याणि द्रव्याणि, उत्तरगुणनिर्मितस्तु
तान्येव तदाकारवन्तीति, तथाऽभिलप्यते तेनेत्यभिलापः—शब्दस्तत्राभिलापपुरुष· पुंलिङ्गाभिधानमात्र घट पट इति, चिन्हे—
चिन्हविषय· पुरुष·—अपुरुषोऽपि पुरुषचिन्होपलक्षितो, यथा नपुसक श्मश्रुचिन्हमित्यादि, तथा त्रिष्वपि लिङ्गेषु स्त्रीपुनपु-

विवक्षितपदार्थापायेऽपि तस्य ध्रुवत्वेन कार्यकारकत्वात्, 'दो अवखण्डने' दानं-खण्डनं अपसृत्य मर्यादया दानं-खण्डनं वियोजन मृत्पिण्डादेर्यत्तदपादान, तथाहि-मृत्पिण्डस्यापायेऽपि भूर्ध्रुवेति तस्या अपादानता, सा च घटस्य कारण, तामन्तरेण तस्यानुत्पादात्, तथा सन्निधानं च कारण, तस्याधारतया कार्योपकारकत्वात्, सन्निधीयते यत्र कार्य तत्सन्निधानं-अधिकरणं, तच्च घटस्य चक्रं, तस्यापि भू , तस्या अप्याकाशं, आकाशस्य त्वधिकरणं नास्ति, स्वरूपप्रतिष्ठत्वात्, घटस्य चेद कारणम्, एतदभावे घटानुत्पत्तेः। उक्तं द्रव्यकारणमिदानी भावकारणप्रतिपादनार्थमाह—

दुविहं च होइ भावे अपसत्थ पसत्थगं च अपसत्थं। संसारस्सेगविहं दुविहं तिविहं च नायव्वं ॥ ७३९॥

भवतीति भाव , स च औदायिकादिभावः, भाव एव कारणं ससारापवर्गयोरिति भावकारणं, तच्च द्विविधं च-द्विप्रकार च भवति, भावे विचार्यमाणे, कारणमिति प्रक्रमाद्गम्यते, भावविपय वा कारणं भावकारणमित्यर्थः, अप्रशस्तं-अशोभन प्रशस्त च-शोभन, तत्राप्रशस्तं ससारस्य सम्बन्धि, तच्च एकविधम्-एकभेद द्विविधं-द्विभेदमेवं त्रिविधं च ज्ञातव्यं, चशब्दश्चतुर्विधाद्यनुक्तकारणभेदसमुच्चयार्थः। यदुक्त ससारस्यैकविधमित्यादि तदुपदर्शनायाह—

अस्सजमो य एक्को अण्णाणं अविरई य दुविहं तु। अन्नाणं मिच्छत्त अविरई चेव तिविहं तु ॥ ७४० ॥

असयमः-अविरतिलक्षण , स ह्येक एव ससारकारणम्, अज्ञानादीना तदुपष्टम्भकत्वेनाप्रधानत्वात्, तथा अज्ञानं अविरतिश्चेति द्विविधं ससारकारण, तत्राज्ञान कर्माच्छादितजीवस्य विपरीतोऽवबोध , अविरतिः-सावद्ययोगानिवृत्तिः, तथा

कारण, तद्व्यतिरेकेण पटानुत्पत्ते, यथा तन्तुभिर्विना न भवति पटस्तथा तद्गतातानादिचेष्टाव्यतिरेकेणापि न भवति, तस्याश्च चेष्टाया वेमादि कारण, ततो निमित्तस्येद नैमित्त तदेव कारण नैमित्तकारणमिति ।

समवाइअसमवाई छव्विह कत्ता य करण कम्म च । तत्तो अ सपयाणाऽपयाण तह सन्निहाणे अ ॥ ७३८ ॥

सम्–एकीभावेऽवशब्द –अपृथक्त्वे अय् गतौ इण् गतौ वा, ततश्च एकीभावेनापृथग्गमनं समवाय –सश्लेष, स येषा विद्यते ते समवायिन –तन्तवो, यस्मात्तेषु पट समवैतीति, समवायिनश्च ते कारणं च समवायिकारणं, तन्तुसयोगास्तु कारणरूपद्रव्यान्तरधर्म्मत्वेन पटाख्यकार्यद्रव्यान्तरस्य दूरवर्तित्वादसमवायिन' त एव कारणं असमवायिकारणं, आह–तद्व्यादिप्रकारत्रयेऽपि यथोक्तप्रकारेणार्थस्याभेद एव तत. कि भेदेनोपन्यास. ?, नैष दोष., सज्ञाभेदेन तन्त्रान्तराभ्युपगमप्रदर्शनफलत्वादस्य, अथवा षड्विध कारणं, अनुस्वारलोपोऽत्र द्रष्टव्यः, करोतीति कारणमिति व्युत्पत्ते., स्वेन व्यापारेण यत् कार्येपूपयुज्यते तत् कारण, तच्च षड्विधं–षट्प्रकार, कथमित्याह–कर्त्ता च कारणं, तस्य कार्येण स्वातन्त्र्येणोपयोगात्, तमन्तरेण विवक्षितकार्यानुपपत्ते, अभीष्टकारणं च तत्, ततश्च घटोत्पत्तौ कुलालः कारणमिति, तथा करणं–मृत्पिण्डदण्डसूत्रादिक घटस्य कारणं, साधकतमत्वात्, तथा क्रियते, निर्वर्त्यते यत् तत्कर्म्म–क्रियाफलमित्यर्थ, उक्त च–"निर्वर्त्यं वा विकार्यं वा, प्राप्य वा यत्क्रियाफलम् । तद् दृष्टादृष्टसस्कार, कर्म्म कर्त्तुर्यदीप्सितम् ॥१॥" तदपि च कारण, आह–तत्कथमेतदलब्धात्मलाभं तदा कारणमिति, उच्यते, कार्यनिर्वर्त्तनक्रियाविषयतया तस्योपचारात् कारणता, मुख्यवृत्त्या चासौ कार्यगुणमपेक्ष्य कर्म्मकारण, तथा सम्प्रदानं तस्य कर्म्मणाऽभिप्रेतत्वात्, तमन्तरेण तस्याभावात्, तथा अपादान कारण,

विवक्षितपदार्थापायेऽपि तस्य ध्रुवत्वेन कार्यकारकत्वात्, 'दो अवखण्डने' दानं—खण्डन अपसृत्य मर्यादया दानं—खण्डन वियोजन मृत्पिण्डादेर्यत्तदपादान, तथाहि—मृत्पिण्डस्यापायेऽपि भूर्ध्रुवेति तस्या अपादानता, सा च घटस्य कारण, तामन्तरेण तस्यानुत्पादात्, तथा सन्निधानं च कारण, तस्याधारतया कार्योपकारकत्वात्, सन्निधीयते यत्र कार्यं तत्सन्निधानं—अधिकरणं, तच्च घटस्य चक्रं, तस्यापि भू·, तस्या अप्याकाश, आकाशस्य त्वधिकरण नास्ति, स्वरूपप्रतिष्ठत्वात्, घटस्य चेद कारणम्, एतदभावे घटानुत्पत्तेः। उक्त द्रव्यकारणमिदानी भावकारणप्रतिपादनार्थमाह—

दुविहं च होइ भावे अपसत्थ पसत्थगं च अपसत्थं। संसारस्सेगविहं दुविहं तिविहं च नायव्वं ॥ ७३९ ॥

भवतीति भाव·, स च औदायिकादिभावः, भाव एव कारणं ससारापवर्गयोरिति भावकारण, तच्च द्विविध च—द्विप्रकार च भवति, भावे विचार्यमाणे, कारणमिति प्रक्रमाद्गम्यते, भावविषयं वा कारणं भावकारणमित्यर्थ , अप्रशस्त—अशोभन प्रशस्त च—शोभन, तत्राप्रशस्तं ससारस्य सम्बन्धि, तच्च एकविधम्—एकभेदं द्विविधं—द्विभेदमेवं त्रिविधं च ज्ञातव्यं, चशब्दश्चतुर्विधाद्यनुक्तकारणभेदसमुच्चयार्थः। यदुक्त ससारस्यैकविधमित्यादि तदुपदर्शनायाह—

अस्सजमो य एक्को अण्णाणं अविरई य दुविहं तु। अन्नाण मिच्छत्त अविरई चेव तिविहं तु ॥ ७४० ॥

असयम·—अविरतिलक्षण , स ह्येक एव ससारकारणम्, अज्ञानादीना तदुपष्टम्भकत्वेनाप्रधानत्वात्, तथा अज्ञानं अविरतिश्चेति द्विविधं ससारकारणं, तत्राज्ञानं कर्माच्छादितजीवस्य विपरीतोऽवबोधः, अविरतिः—सावद्ययोगानिवृत्तिः, तथा

कारण, तद्व्यतिरेकेण पटानुत्पत्ते, यथा तन्तुभिर्विना न भवति पटस्तथा तद्गताताानादिचेष्टाव्यतिरेकेणापि न भवति, तस्याश्च चेष्टाया वेमादि कारण, ततो निमित्तस्येद नैमित्त तदेव कारण नैमित्तकारणमिति ।

समवाइअसमवाई छव्विह कत्ता य करण कम्म च । तत्तो अ सपयाणाऽपयाण तह सन्निहाणे अ ॥ ७३८ ॥

सम्-एकीभावेऽवशब्द -अपृथक्त्वे अय् गतौ इण् गतौ वा, ततश्च एकीभावेनापृथग्गमनं समवाय.-सम्श्लेष', स येषा विद्यते ते समवायिन -तन्तवो, यस्मात्तेषु पट समवैतीति, समवायिनश्च ते कारणं च समवायिकारणं, तन्तुसयोगास्तु कारणरूपद्रव्यान्तरधर्मत्वेन पटाख्यकार्यद्रव्यान्तरस्य दूरवर्तित्वादसमवायिन' त एव कारणं असमवायिकारणं, आह-तद्द्व्यादिप्रकारत्रयेऽपि यथोक्तप्रकारेणार्थस्याभेद एव तत. कि भेदेनोपन्यास. ?, नैष दोष., सज्ञाभेदेन तन्त्रान्तराभ्युपगमप्रदर्शनफलत्वादस्य, अथवा षड्विध कारणं, अनुस्वारलोपोऽत्र द्रष्टव्य', करोतीति कारणमिति व्युत्पत्तेः, स्वेन व्यापारेण यत् कार्येपूपयुज्यते तत् कारण, तच्च षड्विधं-षट्प्रकार, कथमित्याह-कर्त्ता च कारणं, तस्य कार्येण स्वातन्त्र्येणोपयोगात्, तमन्तरेण विवक्षितकार्यानुपपत्ते, अभीष्टकारणं च तत्, ततश्च घटोत्पत्तौ कुलालः कारणमिति, तथा करणं-मृत्पिण्डदण्डसूत्रादिक घटस्य कारणं, साधकतमत्वात्, तथा क्रियते, निर्वर्त्यते यत् तत्कर्म्म-क्रियाफलमित्यर्थ', उक्त च-"निर्वर्त्य वा विकार्य वा, प्राप्य वा यत्क्रियाफलम्। तद् दृष्टादृष्टसस्कार, कर्म्म कर्त्तुर्यदीप्सितम् ॥१॥" तदपि च कारण, आह-तत्कथमेतदलब्धात्मलाभं तदा कारणमिति, उच्यते, कार्यनिर्वर्त्तनक्रियाविषयतया तस्योपचारात् कारणता, मुख्यवृत्त्या चासौ कार्यगुणमपेक्ष्य कर्म्मकारण, तथा सम्प्रदानं तस्य कर्म्मणाऽभिप्रेतत्वात्, तमन्तरेण तस्याभावात्, तथा अपादान कारणं,

विवक्षितपदार्थापायेऽपि तस्य ध्रुवत्वेन कार्यकारकत्वात्, 'दो अवखण्डने' दानं–खण्डनं अपसृत्य मर्यादया दानं–खण्डन नियोजन मृत्पिण्डादेर्यत्तदपादान, तथाहि–मृत्पिण्डस्यापायेऽपि भूर्ध्रुवेति तस्या अपादानता, सा च घटस्य कारण, तामन्तरेण तस्यानुत्पादात्, तथा सन्निधानं च कारणं, तस्याधारतया कार्योपकारकत्वात्, सन्निधीयते यत्र कार्य तत्सन्निधानं–अधिकरणं, तच्च घटस्य चक्रं, तस्यापि भू', तस्या अप्याकाशं, आकाशस्य त्वधिकरणं नास्ति, स्वरूपप्रतिष्ठत्वात्, घटस्य चेद कारणम्, एतदभावे घटानुत्पत्तेः । उक्तं द्रव्यकारणमिदानी भावकारणप्रतिपादनार्थमाह—

दुविहं च होइ भावे अपसत्थ पसत्थगं च अपसत्थं । संसारस्सेगविहं दुविहं तिविहं च नायव्वं ॥ ७३९ ॥

भवतीति भाव', स च औदायिकादिभाव', भाव एव कारणं ससारापवर्गयोरिति भावकारणं, तच्च द्विविधं च–द्विप्रकार च भवति, भावे विचार्यमाणे, कारणमिति प्रक्रमाद्गम्यते, भावविषय वा कारणं भावकारणमित्यर्थः, अप्रशस्तं–अशोभन प्रशस्त च–शोभन, तत्राप्रशस्त ससारस्य सम्बन्धि, तच्च एकविधम्–एकभेद द्विविधं–द्विभेदमेवं त्रिविधं च ज्ञातव्यं, चशब्दश्चतुर्विधाद्यनुक्तकारणभेदसमुच्चयार्थ. । यदुक्त ससारस्यैकविधमित्यादि तदुपदर्शनायाह—

अस्सजमो य एक्को अण्णाणं अविरई य दुविहं तु । अन्नाणं मिच्छत्त अविरई चेव तिविहं तु ॥ ७४० ॥

असयम.–अविरतिलक्षण', स ह्येक एव ससारकारणम्, अज्ञानादीना तदुपष्टम्भकत्वेनाप्रधानत्वात्, तथा अज्ञानं अविरतिश्चेति द्विविधं ससारकारण, तत्राज्ञानं कर्माच्छादितजीवस्य विपरीतोऽनवबोध, अविरतिः–सावद्ययोगानिवृत्तिः, तथा

मिथ्यात्वमज्ञानमविरतिश्चेति त्रिविध ससारकारण, तत्र मिथ्यात्व तत्त्वार्थाश्रद्धान, शेषं गतार्थम्, एवं कषायादिसम्पर्का-द्न्येऽपि भेदा प्रतिपादयितव्या । उक्तमप्रशस्त भावकारणम्, अधुना प्रशस्तमुच्यते—

होइ पसत्थ मुक्खस्स कारण एग दुविह तिविहं वा । तं चेव य विवरीअं अहिगारु पसत्थएणित्थ ॥ ७४१ ॥

भवति प्रशस्त भावकारण मोक्षस्य कारणं, तच्च एकमिति–एकभेद द्विविधं त्रिविधं वा, इदं पुनस्तदेव संसारकारणम-सयमादि विपरीत द्रष्टव्यम्, एकविध सयम, द्विविध ज्ञानसयमौ, त्रिविध सम्यग्दर्शनज्ञानचारित्राणि, अधिकार –प्रयो-जन प्रशस्तेन भावकारणेन, अत्र–सामायिकव्याख्याने, मोक्षाङ्गत्वादस्य, तथाहि–सामायिकाध्ययन क्षायोपशमिकश्च प्रशस्तो भावो मोक्षकारणमतोऽधिकार प्रशस्तेन भावकारणेनेति ॥ इत्थं कारणद्वारे अधिकारं प्रदर्श्य पुनः कारणद्वारस-कव्यताशेषमाशङ्काद्वारेणाभिधित्सुराह—

ो किं कारण भासइ सामाइअ तु अज्झयणं ? । तित्थयरनामगुत्तं कम्मं मे वेइअवंति ॥ ७४२ ॥

ीर्थक तत्करणशीलस्तीर्थकर', स किं कारण–किं निमित्तं भाषते सामायिकमध्ययनं, तुशब्दादन्याध्ययनपरि-

कृतकृत्यत्वादिति हृदयं, उच्यते, तीर्थकरनामगोत्र–तीर्थकरनामसंज्ञ, गोत्रशब्द' सज्ञाया, कर्म बद्ध मया व्यमित्यनेन कारणेन भाषते ।

च कहं वेइज्जइ ? अगिलाए धम्मदेसणाईहि । बज्झइ तं तु भगवओ तइअभवोसक्कइत्ताणं ॥ ७४३ ॥

नियमा मणुयगईए इत्थी पुरिसेयरोव सुहलेसो । आसेवियबहुलेहि वीसाए अन्नयरेहि ॥ ७४४ ॥

गाथाद्वयस्यापि व्याख्या प्राग्वत्, इत्थ तीर्थकरस्य सामायिकभाषणकारणमभिधायाधुना गणभृतामाशङ्काद्वारेण तच्छ्रवणकारण प्रतिपादयन्नाह—

**गोअममाई सामाइयं तु किं कारण निसामेति ? । नाणस्स तं तु सुंदरमंगुलभावाण उवलद्धी ॥ ७४५ ॥**

गौतमादयो गणधराः 'किं कारण' किं निमित्त–किं प्रयोजन सामायिकं निशमयन्ति–शृण्वन्ति ?, उच्यते–'नाणस्स'त्ति प्राकृतत्वाच्चतुर्थ्यर्थे षष्ठी, ततश्च ज्ञानाय–ज्ञानार्थं, तादर्थ्ये चतुर्थी, तेषा हि भगवद्वदनविनिर्गतसामायिकशब्दान् श्रुत्वा तदर्थविषय ज्ञानमुत्पद्यते, ततो ज्ञानार्थं शृण्वन्ति, तत्तु ज्ञानं सुन्दरमङ्गुलभावाना–शुभेतरपदार्थाना 'उवलद्धी'ति उपलब्धये–उपलब्धिनिमित्तं, सा च सुन्दरमङ्गुलभावोपलब्धि· प्रवृत्तिनिवृत्त्यो· कारणम् ॥ आह च–

**होइ पवित्तिनिवित्ती सजमतव पावकम्मअग्गहणं । कम्मविवेगो अ तहा कारणमसरीरया चेव ॥७४६॥**

शुभेतरभावपरिज्ञानाद्भवत· प्रवृत्तिनिवृत्ती, शुभेषु प्रवृत्तिर्भवति इतरेषु निवृत्तिरिति भावः, ते च प्रवृत्तिनिवृत्ती सयमतपसो· कारणं, प्रवृत्तिस्तपस कारणं निवृत्तिः सयमस्येति हृदयं, तत्र निवृत्तिकारणकत्वेऽपि सयमस्य प्रागुपादानेन पूर्वकर्मागमनिरोधेऽस्य कारणप्राधान्यख्यापनार्थं, तत्पूर्वकं च वस्तुत· सफलं तप इति ज्ञापनार्थं च, सयमतप·कारणभूतप्रवृत्तिनिवृत्त्योस्तु प्रयोजनोपन्यास· संयमे सत्यपि तपसि प्रवृत्ति· कार्येत्यमुनाशेन तपसः प्राधान्यख्यापनार्थः, इत्यलं प्रसङ्गेन, तयोश्च सयमतपसोः कारणं–निमित्त प्रयोजन यथासङ्ख्यं 'पावकम्मअग्गहणं'ति पापकर्माग्रहणं तथा कर्मविवेकश्च,

मिथ्यात्वमज्ञानमविरतिश्चेति त्रिविध ससारकारण, तत्र मिथ्यात्व तत्त्वार्थाश्रद्धान, शेषं गतार्थम्, एवं कषायादिसम्पर्का-
दन्येऽपि भेदा प्रतिपादयितव्या । उक्तमप्रशस्त भावकारणम्, अधुना प्रशस्तमुच्यते—

होइ पसत्थ मुक्खस्स कारणं एग दुविह तिविह वा । त चेव य विवरीअ अहिगारु पसत्थएणित्थ ॥ ७४१ ॥

भवति प्रशस्त भावकारण मोक्षस्य कारण, तच्च एकमिति-एकभेद द्विविधं त्रिविधं वा, इद पुनस्तदेव संसारकारणम-
मयमादि विपरीत द्रष्टव्यम्, एकविध सयम', द्विविधं ज्ञानसयमौ, त्रिविध सम्यग्दर्शनज्ञानचारित्राणि, अधिकार -प्रयो-
जन प्रशस्तेन भावकारणेन, अत्र-सामायिकव्याख्याने, मोक्षाङ्गत्वादस्य, तथाहि-सामायिकाध्ययन क्षायोपशमिकश्च
प्रशस्तो भावो मोक्षकारणमतोऽधिकार प्रशस्तेन भावकारणेनेति ॥ इत्थं कारणद्वारे अधिकारं प्रदर्श्य पुनः कारणद्वारस-
म्बन्धमेव वक्तव्यताशेषमाशङ्काद्वारेणाभिधित्सुराह—

तित्थयरो किं कारण भासइ सामाइअ तु अज्झयणं ? । तित्थयरनामगुत्तं कम्मं मे वेइअव्वंति ॥ ७४२ ॥

तीर्थं पूर्वोक्त तत्करणशीलस्तीर्थंकर', स किं कारणं-किं निमित्तं भाषते सामायिकमध्ययन, तुशब्दादन्याध्ययनपरि-
ग्रह, तस्य कृतकृत्यत्वादिति हृदय, उच्यते, तीर्थकरनामगोत्र-तीर्थकरनामसंज्ञ, गोत्रशब्दः सज्ञाया, कर्म बद्ध मया
वेदितव्यमित्यनेन कारणेन भाषते ।

तं च कहं वेइज्जइ ? अगिलाए धम्मदेसणाईहिं । बज्झइ तं तु भगवओ तइअभवोसक्कइत्ताणं ॥ ७४३ ॥

नियमा मणुयगईए इत्थी पुरिसेयरोव्व सुहलेसो । आसेवियबहुलेहिं वीसाए अन्नयरेहि ॥ ७४४ ॥

गाथाद्वयस्यापि व्याख्या प्राग्वत्, इत्थं तीर्थकरस्य सामायिकभाषणकारणमभिधायाधुना गणभृतामाशङ्काद्वारेण तच्छ्रवणकारणं प्रतिपादयन्नाह—

**गोअममाई सामाइयं तु किं कारणं निसामेंति ?। नाणस्स तं तु सुंदरमंगुलभावाण उवलद्धी ॥ ७४५ ॥**

गौतमादयो गणधराः 'किं कारणं' किं निमित्तं—किं प्रयोजनं सामायिकं निशमयन्ति—शृण्वन्ति ?, उच्यते—'नाणस्स'त्ति प्राकृतत्वाच्चतुर्थ्यर्थे षष्ठी, ततश्च ज्ञानाय—ज्ञानार्थं, तादर्थ्ये चतुर्थी, तेषां हि भगवद्वदनविनिर्गतसामायिकशब्दान् श्रुत्वा तदर्थविषयं ज्ञानमुत्पद्यते, ततो ज्ञानार्थं शृण्वन्ति, तत्तु ज्ञानं सुन्दरमङ्गुलभावानां—शुभेतरपदार्थानां 'उवलद्धी'ति उपलब्धये—उपलब्धिनिमित्तं, सा च सुन्दरमङ्गुलभावोपलब्धिः प्रवृत्तिनिवृत्त्योः कारणम् ॥ आह च—

**होइ पवित्तिनिवित्ती संजमतव पावकम्मअग्गहणं। कम्मविवेगो अ तहा कारणमसरीरया चेव ॥७४६॥**

शुभेतरभावपरिज्ञानाद्भवत प्रवृत्तिनिवृत्ती, शुभेषु प्रवृत्तिर्भवति इतरेषु निवृत्तिरिति भावः, ते च प्रवृत्तिनिवृत्ती संयमतपसोः कारणं, प्रवृत्तिस्तपसः कारणं निवृत्तिः संयमस्येति हृदयं, तत्र निवृत्तिकारणकत्वेऽपि संयमस्य प्रागुपादानेन पूर्वकर्मागमनिरोधेऽस्य कारणप्राधान्यख्यापनार्थं, तत्पूर्वकं च वस्तुतः सफलं तप इति ज्ञापनार्थं च, संयमतपःकारणभूतप्रवृत्तिनिवृत्त्योस्तु प्रयोजनोपन्यासः संयमे सत्यपि तपसि प्रवृत्तिः कार्येत्यमुनांशेन तपसः प्राधान्यख्यापनार्थः, इत्यलं प्रसङ्गेन, तयोश्च संयमतपसोः कारणं—निमित्तं प्रयोजनं यथासङ्ख्यं 'पावकम्मअग्गहण'त्ति पापकर्माग्रहणं तथा कर्मविवेकश्च,

तथा चोक्त परममुनिभि –"सजमे अणण्हयफले तवे वोदाणफले" अणण्हव –अनाश्रव', वोदाणं–कर्म्मनिर्जरा, कर्म्म-विवेकस्य च प्रयोजनमशरीरतैव च ॥ साम्प्रतं विवक्षितमर्थमुक्तानुवादेन प्रतिपादयन्नाह—

कम्मविवेगो असरीरयाइ असरीरयाऽणवाहाए । होअणवाहनिमित्तं अवेअणु अणाउलो निरुओ ॥ ७४७ ॥

निरुअत्ताए अयलो अयलत्ताए अ सासओ होइ । सासयभावमुवगओ अवाबाहं सुहं लहइ ॥ ७४८ ॥

कर्म्मविवेक –कर्म्मपृथग्भाव अशरीरताया कारणम्, अशरीरता 'अणाबाहाए' इति अनाबाधायाः कारण भवति, 'अनाबाधानिमित्त' अनाबाधाकार्य, निमित्तशब्द कार्यवाचक', लोके च वक्तारो भवन्ति–अनेन निमित्तेन–अनेन कारणेन मयेदमारब्ध, अनेन कार्येणेत्यर्थ , ततश्च भवत्यनाबाधाकार्यमवेदन –वेदनारहितो, जीव इति गम्यते, स चावेदनत्वादनाकुल –अविह्वल , अनाकुलत्वाच्च नीरुग् भवति, ततः स जीवो नीरुक्तया अचलो भवति, अचलतया च शाश्वतो भवति, शाश्वतभावमुपगतोऽव्याबाधं सुख लभते, इत्थ पारम्पर्येण अव्याबाधसुखार्थं सामायिकश्रवणमिति गौतमादय शृण्वन्ति ॥ गत कारणद्वारम्, अधुना प्रत्ययद्वारमाह—

पच्चयनिक्खेवो खलु दव्वंमी तत्तमासगाईओ । भावंमि ओहिमाई तिविहो पगयं तु भावेणं ॥ ७४९ ॥

प्रत्याययतीति प्रत्यय'–अन्तर्भूतण्यर्थादत्प्रत्यय• प्रत्ययस्तस्य निक्षेपो–न्यास प्रत्ययनिक्षेप•, खलुशब्दोऽनन्तरोक्तकारणनिक्षेपसाम्यप्रदर्शनार्थं , ततश्च नामादिचतुर्विधः प्रत्ययनिक्षेपः, तत्र नामस्थापने सुगमे, 'द्रव्ये' द्रव्यविषयो ज्ञशरीर-भव्यशरीरव्यतिरिक्तः प्रत्यय• तप्तमाषकादि , आदिशब्दात् घटादिपरिग्रह , द्रव्य च तत् प्रत्याय्यप्रतीतिहेतुत्वाद्

प्रत्ययश्च द्रव्यप्रत्ययः, तप्तमापकादिरेव, द्रव्यात् प्रत्ययो द्रव्यप्रत्यय', तप्तमापकादिजन्यः प्रत्याय्यपुरुषस्य प्रत्यय, 'भावमि'त्ति भावे विचार्यमाणे अवध्यादिस्त्रिविधो भावप्रत्यय', तस्य बाह्यलिङ्गकारणानपेक्षत्वात्, आदिशब्दात् मन'पर्याय-केवलपरिग्रह॰, मतिश्रुते तु बाह्यलिङ्गकारणापेक्षित्वान्न विवक्षिते, 'पगयं तु भावेण'ति सामायिकमङ्गीकृत्य प्रकृतम्-उपयोगस्तु 'भावेन' भावप्रत्ययेन । तथा चाह—

केवलनाणित्ति अहं अरिहा सामाइयं परिकहेइ । तेसिपि पच्चओ खलु सव्वन्नू तो निसामंति ॥ ७५० ॥

केवलज्ञानी अहमिति स्वप्रत्ययादर्हन् प्रत्यक्षत एव सामायिकार्थमुपलभ्य सामायिकं परिकथयति, तेषामपि-श्रोतॄणा गणधरादीना हृद्गताशेषसंशयपरिच्छित्त्या प्रत्ययः-अवबोध' सर्वज्ञ एष भगवानित्येवंभूतो भवति, तेन यत् कैश्चिदुच्यते-'सर्वज्ञोऽसाविति ह्येतत्तत्कालेऽपि बुभुत्सुभि॰ । तज्ज्ञानज्ञेयविज्ञानरहितैर्गम्यते कथ ॥ १ ॥' मित्यादि, तदपास्तमवसेयम्, अन्यथा चतुर्वेदादिव्यवहारस्यापि विलोपप्रसक्तेः, विजृम्भितं चैतद्विषये पूर्वसूरिभिः प्रवचनसिद्ध्यादिषु, तत॰ सञ्जातप्रत्यया निशामयन्तीति ॥ गत प्रत्ययद्वारम्, इदानी लक्षणद्वारप्रतिपादनार्थमाह—

नामं ठवणा दविए सरिसे सामन्न लक्खणागारे । गइरागइ नाणत्ते निमित्त उप्पाय विगमे अ ॥ ७५१ ॥

लक्ष्यतेऽनेनेति लक्षण, तच्च पदार्थाना प्रतिविशिष्टं स्वरूपं, तच्च द्वादशप्रकार, तत्र नामलक्षणं-लक्षणमितीयं वर्णानुपूर्वी, अथवा यस्य कस्यचित् जीवादेर्लक्षणमिति नाम क्रियते तद्वस्तु नाम्ना हेतुभूतेन लक्षण, अथवा 'नामनामवतोरभेदोपचारात्' नाम च तल्लक्षण च नामलक्षणं, स्थापनालक्षण लकारादिवर्णानामाकारविशेष॰, अथवा लक्षणाना स्वस्ति

तया चोक्त परममुनिभि –"सजमे अणण्हयफले तवे वोदाणफले" अणण्हव –अनाश्रव', वोदाणं–कर्मनिर्ज्जरा, कर्म्म-विवेकस्य च प्रयोजनमशरीरतैव च ॥ साम्प्रतं विवक्षितमर्थमुक्तानुवादेन प्रतिपादयन्नाह—

कम्मविवेगो असरीरयाइ असरीरयाऽणबाहाए । होअणवाहनिमित्तं अवेअणु अणाउलो निरुओ ॥ ७४७ ॥

निरुअत्ताए अयलो अयलत्ताए अ सासओ होइ । सासयभावमुवगओ अवावाहं सुहं लहइ ॥ ७४८ ॥

कर्म्मविवेक –कर्म्मपृथग्भाव अशरीरताया कारणम्, अशरीरता 'अणाबाहाए' इति अनाबाधाया• कारण भवति, 'अनाबाधानिमित्त' अनाबाधाकार्य, निमित्तशब्द कार्यवाचक', लोके च वक्तारो भवन्ति–अनेन निमित्तेन–अनेन कारणेन मयेदमारब्ध, अनेन कार्येणेत्यर्थ , ततश्च भवत्यनाबाधाकार्यमवेदन –वेदनारहितो, जीव इति गम्यते, स चावेदनत्वादनाकुल•–अविह्वल , अनाकुलत्वाच्च नीरुग् भवति, ततः स जीवो नीरुक्तया अचलो भवति, अचलतया च शाश्वतो भवति, शाश्वतभावमुपगतोऽव्याबाधं सुख लभते, इत्थ पारम्पर्येण अव्याबाधसुखार्थं सामायिकश्रवणमिति गौतमादय शृण्वन्ति ॥ गत कारणद्वारम्, अधुना प्रत्ययद्वारमाह—

पच्चयनिक्खेवो खलु दव्वमी तत्तमासगाईओ । भावंमि ओहिमाई तिविहो पगयं तु भावेणं ॥ ७४९ ॥

प्रत्याययतीति प्रत्यय'–अन्तर्भूतण्यर्थादत्प्रत्यय• प्रत्ययस्तस्य निक्षेपो–न्यास प्रत्ययनिक्षेप•, खलुशब्दोऽनन्तरोक्तकारणनिक्षेपसाम्यप्रदर्शनार्थः, ततश्च नामादिचतुर्विध• प्रत्ययनिक्षेप , तत्र नामस्थापने सुगमे, 'द्रव्ये' द्रव्यविषयो ज्ञशरीरभव्यशरीरव्यतिरिक्तः प्रत्यय तप्तमापकादि , आदिशब्दात घटादिपरिग्रहः, द्रव्य च तत् प्रत्याय्यप्रतीतिहेतुत्वाद्

जीवो देव इति विशेषणविशेष्यभूतपदद्वये जीव इति पूर्वपदं देवत्वं व्यभिचरत्यपि, जीवस्य देवस्यादेवस्य च नारकादे-र्दर्शनात्, देवो जीव इति प्रत्यावृत्तौ देवो जीवत्वं न व्यभिचरति, देवस्यावश्यं जीवत्वात्, तत. पूर्वपदव्याहतमेतत्, उत्तरपदव्याहत यथा-'जीवइ भंते ! जीवे ?, जीवे जीवेइ ?, गोयमा ! जीवइ ताव नियमा जीवे, जीवे पुण सिय जीवइ सिय नो जीवइ' इह जीव इति दशविधप्राणधारी भण्यते, स नियमात् जीवः, अजीवे दशविधप्राणासम्भवात्, जीवः पुनः स्यात् जीव इति स्यान्न जीव इति, सिद्धाना दशविधप्राणधारणासम्भवात्, तत इह उत्तरपदं व्याहतं, व्यभिचारात्, पूर्वपदं त्वव्याहतं, जीवनस्य जीवमन्तरेणाभावादिति, उभयपदव्याहतं यथा-'भवसिद्धिए णं भंते ! नेरइए ? नेरइए भव-सिद्धिए ?, गोयमा ! नेरइए सिय भवसिद्धिए सिय अभवसिद्धिएवि, भवसिद्धिए सिय नेरइए सिय अनेरइए' अत्र पूर्वपदवर्ती भव्यो नैरयिकत्वं व्यभिचरति, अनैरयिकस्य देवादेरपि भव्यत्वभावात्, एवमुत्तरपदवर्ती नैरयिको भव्यत्व व्यभि चरति, अभव्यस्यापि नैरयिकत्वभावात्, अत इदमुभयपदव्याहतं, उभयपदाव्याहतं यथा-'जीवे भते ! जीवे ?, जीवे जीवे ?, गोयमा ! जीवे नियमा जीवे, जीवेऽवि नियमा जीवे' इह एकस्य जीवशब्दस्योपयोगो वाच्यः, अपरस्य जीवद्रव्य, तत उपयोगो नियमात् जीवो, जीवोऽपि नियमादुपयोग इत्युभयपदाव्याहतमेतत्, लोकेऽपि चतु-र्विधमिद गत्यागतिलक्षणं प्रसिद्ध, तद्यथा-पूर्वपदव्याहतं यथा रूपी घट इति, रूपी हि घटो भवत्यघटश्च पटादिरिति पूर्वपदव्याहति', घटस्तु रूप्येवेत्युत्तरपदव्याघात , उत्तरपदाव्याहतं यथा चूतो द्रुम इति, इह चूतो द्रुम एवेति पूर्वपदा-व्याघात', द्रुमश्च चूतोऽपि स्यादचूतोऽप्यश्वत्थादिरित्युत्तरपदव्याहति', उभयपदव्याहत यथा नीलोत्पलं, नीलं ह्युत्पल

कशङ्खचक्रध्वजादीना यो मङ्गलपट्टादावक्षतादिभिर्न्यासस्तत् स्थापनालक्षण, ज्ञशरीरभव्यशरीरव्यतिरिक्त यत् यस्य द्रव्यस्यान्यतो व्यवच्छेदक स्वरूप यथा गत्यादि धर्मास्तिकायादीना, इदमेव च किञ्चिन्मात्रविशेपात् सादृश्यसामान्यादि-लक्षणभेद निरूप्यते, तत्र 'सरिस'त्ति सादृश्य लक्षण, यथाऽस्मिन् देशे घटा ऊर्ध्वग्रीवा अधस्तात्परिमण्डला त्रिपुलकु-क्षयस्तथाऽन्येष्वपि देशेष्वित्यादि, 'सामन्नलक्खण'ति सामान्यलक्षण यथा सिद्धः सिद्धाना सद्द्रव्यजीवमुक्तत्वादिधर्म समान इति, 'आगारे'त्ति आक्रियते-अभिप्रेतं ज्ञायते अनेनेत्याकारो-बाह्यचेष्टारूपः स एवान्तराकूतगमकत्वाल्लक्षणमा-कारलक्षणम्, अन्तराकूतगमकता चाकारस्य सुप्रसिद्धा, उक्त च-"आकारैरिङ्गितैर्गत्या, चेष्टया भाषणेन च। नेत्रवक्त्रवि-कारैश्च, लक्ष्यतेऽन्तर्गत मन ॥ १ ॥" इति, 'गइरागइ'त्ति गत्यागतिलक्षणं, तत्र द्वयोर्द्वयो पदयोर्विशेषणविशेष्यत-याऽनुकूलगमन गति, यथा-'जीवे ण भते! देवे? देवे भंते! जीवे?' इत्यत्र वाक्ये जीवो भदन्त! देव इति जीवमनूद्य देवत्व पृच्छ्यते, अत्र जीवपदाद्देवपदे आनुकूल्येन यथास्थित्या गति', प्रत्यावृत्त्या-प्रातिकूल्येन गमनमागतिः, यथा देवो जीव इत्यत्र देवमनूद्य जीवत्वं पृच्छ्यते इति, इह प्रत्यावृत्त्या देवपदाज्जीवपदे आगतिः, गतिश्चागतिश्च गत्यागती ताभ्या ते वा लक्षण गत्यागतिलक्षण, उक्त च-"अपरोप्पर पयाणं विसेसणविसेसणिज्जया जत्थ। गच्चाईए दोण्ह गइरागइल-क्खणं त तु ॥ १ ॥ (वि २१५६) तच्चतुर्धा, तद्यथा-पूर्वपदव्याहतमुत्तरपदव्याहतं उभयपदव्याहतं उभयपदाव्याहतं च, तत्र पूर्वपद व्याहतं-व्यभिचारि यत्र तत् पूर्वपदव्याहत, पूर्वपदव्यभिचारीत्यर्थः, एवमन्येष्वपि यथायोगं समास, तत्र पूर्वप-दव्याहत यथा-'जीवे भते! देवे?, देवे जीवे?,-गोयमा! जीवे सिय देवे सिय नो देवे, देवे पुण नियमा जीवे" इति, अत्र

जीवो देव इति विशेषणविशेष्यभूतपदद्वये जीव इति पूर्वपद देवत्वं व्यभिचरत्यपि, जीवस्य देवस्यादेवस्य च नारकादेर्दर्शनात्, देवो जीव इति प्रत्यावृत्तौ देवो जीवत्वं न व्यभिचरति, देवस्यावश्यं जीवत्वात्, तत. पूर्वपदव्याहतमेतत्, उत्तरपदव्याहत यथा–'जीवइ भंते ! जीवे ?, जीवे जीवेइ ?, गोयमा ! जीवइ ताव नियमा जीवे, जीवे पुण सिय जीवइ सिय नो जीवइ' इह जीव इति दशविधप्राणधारी भण्यते, स नियमात् जीवः, अजीवे दशविधप्राणासम्भवात्, जीवः पुनः स्यात् जीव इति स्यान्न जीव इति, सिद्धाना दशविधप्राणधारणासम्भवात्, तत इह उत्तरपदं व्याहतं, व्यभिचारात्, पूर्वपदं त्वव्याहतं, जीवनस्य जीवमन्तरेणाभावादिति, उभयपदव्याहतं यथा–'भवसिद्धिए णं भंते ! नेरइए ? नेरइए भवसिद्धिए ?, गोयमा ! नेरइए सिय भवसिद्धिए सिय अभवसिद्धिएवि, भवसिद्धिए सिय नेरइए सिय अनेरइए' अत्र पूर्वपदवर्ती भव्यो नैरयिकत्वं व्यभिचरति, अनैरयिकस्य देवादेरपि भव्यत्वभावात्, एवमुत्तरपदवर्ती नैरयिको भव्यत्व व्यभिचरति, अभव्यस्यापि नैरयिकत्वभावात्, अत इदमुभयपदव्याहत, उभयपदाव्याहतं यथा–'जीवे भते ! जीवे ?, जीवे जीवे ?, गोयमा ! जीवे नियमा जीवे, जीवेऽवि नियमा जीवे' इह एकस्य जीवशब्दस्योपयोगो वाच्य', अपरस्य जीवद्रव्य, तत उपयोगो नियमात् जीवो, जीवोऽपि नियमादुपयोग इत्युभयपदाव्याहतमेतत्, लोकेऽपि चतुर्विधमिद गत्यागतिलक्षणं प्रसिद्ध, तद्यथा–पूर्वपदव्याहतं यथा रूपी घट इति, रूपी हि घटो भवत्यघटश्च पटादिरिति पूर्वपदव्याहति', घटस्तु रूप्येवेत्युत्तरपदव्याघात', उत्तरपदाव्याहतं यथा चूतो द्रुम इति, इह चूतो द्रुम एवेति पूर्वपदाव्याघात, द्रुमश्च चूतोऽपि स्यादचूतोऽप्यश्वत्थादिरित्युत्तरपदव्याहतिः, उभयपदव्याहतं यथा नीलोत्पलं, नीलं ह्युत्पल

मरकतादि च भवति, उत्पलमपि नीलमनील च शुक्लादिरूपमिति, उभयपदाव्याहतं यथा जीवः सचेतनः, जीवो नियमात् सचेतन, चेतनाऽपि जीवस्यैवेत्युभयपदाव्यभिचार., उक्तञ्च—"रूवी घडोत्ति चूतो दुमोत्ति नीलुप्पल च लोयम्मि । जीवो सचेयणोत्ति य भगचउक्क फुड सिद्ध ॥ १ ॥ ( वि २१६० )" तथा 'णाणत्ति'त्ति, नानाभावो—नानाविशेष. सा लक्षण नानातालक्षण, सा च नानाता चतुर्धा, द्रव्यक्षेत्रकालभावभेदात्, तत्र द्रव्यतो नानाता द्विधा—तद्द्रव्यनानाता अन्यद्रव्यनानाता च, तद्द्रव्यनानाता यथा परमाणूना परस्परतो भिन्नता, अन्यद्रव्यनानाता यथा परमाणोर्द्व्यणुका-दिभ्यो भिन्नता, क्षेत्रतोऽपि नानाता द्विधा—तत्क्षेत्रनानाता अतत्क्षेत्रनानाता च, तत्क्षेत्रनानाता यथा एकप्रदेशाव-गाढाना परस्परभिन्नता, अतत्क्षेत्रनानाता यथा एकप्रदेशावगाढस्य द्विदेशावगाढादिभ्यो भिन्नता, एवमेकादिसमय-स्थित्येकादिगुणयुक्ताना तदतन्नानाता वाच्या, इय च लक्षणं, पदार्थस्वरूपावस्थापकत्वात्, 'निमित्तं' इति लक्ष्यते शुभाशुभमनेनेति लक्षणं निमित्तमेव लक्षण निमित्तलक्षणं, तदष्टप्रकारम्, उक्तं च—"भोमं सुमिणंतलिक्खं दिव अग सर लक्खणं तह य । वजणमट्ठविहं खलु निमित्तमेयं मुणेयव ॥ १ ॥" स्वरूपमस्य ग्रन्थान्तरादवसेयम्, एकैकमप्य-तीतानागतवर्त्तमानस्वरूपकालत्रयविषयं, उक्त च—"लक्खिज्जई सुभासुभमणेण तो लक्खणं निमित्तति । भोमाइ तदट्ठ-विह तिकालविसय जिणाभिहिय ॥ १ ॥" 'उप्पाय'त्ति यतो नानुत्पन्न लक्ष्यते वस्तु तत उत्पादोऽपि लक्षणं, 'विगमो य'त्ति विगमश्च—विनाशश्च वस्तुलक्षणं, तमन्तरेणोत्पादाभावात्, न हि व्यक्ततया अविनष्टमङ्गुलिद्रव्यमृजुतयोत्पद्यते इति भावना । वीरिय भावे अ तहा लक्खणमेअ समासओ भणियं । अहवावि भावलक्खण चउविह सद्दहणमाई ॥७५२॥

'वीरियं'ति वीर्य–वलं, तच्च जीवस्य लक्षणं, तथाहि–तेन जीवो लक्ष्यते, अथवा सामर्थ्य यत् यस्य वस्तुनश्चेतनस्याचेतनस्य वा तद्वीर्यं, तच्च विचित्ररूप, तदेव लक्षण पदार्थस्वरूपावच्छेदहेतुत्वात् वीर्यलक्षणम्, आह च भाष्यकारः—

विरियति घल जीवस्स लक्खणं ज च जस्स सामत्थं । दव्वस्स चित्तरूवं जह विरिय महोसहाईणं ॥ १ ॥

तथा भावानामौदयिकादीना लक्षण भावलक्षणं,यथा उदयलक्षण औदयिक ,उपशमलक्षणस्त्वौपशमिकः, अनुत्पत्तिलक्षण· क्षायिक ,मिश्रलक्षण क्षायोपशमिकः,परिणामलक्षण पारिणामिकः,सयोगलक्षण· सान्निपातिक इति, अथवा भावाश्च ते लक्षण चात्मन इति भावलक्षण, तत्र सामायिकस्य जीवगुणरूपस्य क्षयोपशमोपशमक्षयस्वभावत्वाद्वा लक्षणता, उपसहारमाह–लक्षणमेतत् त्रयोदशभेदं समासत'–सङ्क्षेपेण भणितम्, अथवापि भावस्य सामायिकस्य लक्षणं, अनुस्वारलोपोऽत्र द्रष्टव्य , चतुर्विधं श्रद्धानादि ॥ एतदेव प्रतिदिदर्शयिपुराह—

सद्दहण जाणणा खलु विरई मीसा य लक्खणं कहइ । तेऽवि निसामंति तहा चउलक्खणसंजुअ चेव ॥७६३॥

इह सामायिक चतुर्विधं भवति, तद्यथा–सम्यक्त्वसामायिकं श्रुतसामायिक चारित्रसामायिक चारित्राचारित्रसामायिकं च, अस्य यथायोग लक्षण, 'सद्दहण'त्ति श्रद्धानं, लक्षणमिति योगः, सम्यक्त्वसामायिकस्य, 'जाणण'त्ति ज्ञानं ज्ञा सवित्तिरित्यर्थः, सा च लक्षणं श्रुतसामायिकस्य, खलुशब्दो निश्चयतः परस्परसापेक्षत्वविशेषणार्थ , तथा 'विरइ'इति विरमणं विरतिः–सर्वसावद्ययोगविनिवृत्ति', सा च चारित्रसामायिकस्य लक्षणं, 'मीसा य' इति मिश्रा–विरत्यविरतिः, सा च चारित्राचारित्रसामायिकस्य लक्षण, कथयतीत्यनेन स्वमनीपिकाऽपोहमाह, भगवान् जिन एवं कथयति, तस्य च कथयतस्तेऽपि गणधरादयो

रक्तादि च भवति, उत्पलमपि नीलमनील च शुक्लादिरूपमिति, उभयपदाव्याहतं यथा जीवः सचेतनः, जीरो नियमात्
ाचेतन , चेतनाऽपि जीवस्यैवेत्युभयपदाव्यभिचार , उक्तश्च—"रूवी घडोत्ति चूतो दुमोत्ति नीलुप्पल च लोयम्मि।
ीवो सचेयणोत्ति य भगचउक्क फुड सिद्ध ॥ १ ॥ ( वि २१६० )" तथा 'णाणत्ति'त्ति, नानाभावो—नानाविशेषः सा
लक्षण नानातालक्षण, सा च नानाता चतुर्धा, द्रव्यक्षेत्रकालभावभेदात्, तत्र द्रव्यतो नानाता द्विधा—तद्द्रव्यनानाता
अन्यद्रव्यनानाता च, तद्द्रव्यनानाता यथा परमाणूना परस्परतो भिन्नता, अन्यद्रव्यनानाता यथा परमाणोर्द्व्यणुका-
देभ्यो भिन्नता, क्षेत्रतोऽपि नानाता द्विधा—तत्क्षेत्रनानाता अतत्क्षेत्रनानाता च, तत्क्षेत्रनानाता यथा एकप्रदेशाव-
गाढाना परस्परभिन्नता, अतत्क्षेत्रनानाता यथा एकप्रदेशावगाढस्य द्विदेशावगाढादिभ्यो भिन्नता, एवमेकादिसमय-
स्थित्येकादिगुणयुक्ताना तदतन्नानाता वाच्या, इय च लक्षण, पदार्थस्वरूपावस्थापकत्वात्, 'निमित्त' इति उच्यते
शुभाशुभमनेनेति लक्षण निमित्तमेव लक्षणं निमित्तलक्षणं, तदष्टप्रकारम्, उक्त च—"भोमं सुमिणतलिक्खं दिव्वं अग
सर लक्खण तह य। वजणमट्ठविहं खलु निमित्तमेयं मुणेयव्वं ॥ १ ॥" स्वरूपमस्य ग्रन्थान्तरादवसेयम्, एकैकमप्य-
तीतानागतवर्त्तमानस्वरूपकालत्रयविषयं, उक्त च—"लक्खिज्जई सुभासुभमणेण तो लक्खणं निमित्तति। भोमाइ तदट्ठ-
विह तिकालविसय जिणाभिहिय ॥ १ ॥" 'उप्पाय'त्ति यतो नानुत्पन्न लक्ष्यते वस्तु तत उत्पादोऽपि लक्षणं, 'विगमो य'त्ति
विगमश्च—विनाशश्च वस्तुलक्षणं, तमन्तरेणोत्पादाभावात्, न हि व्यक्ततया अविनष्टमङ्गुलिद्रव्यमृजुतयोत्पद्यते इति भावना।
वीरिय भावे अ तहा लक्खणमेअ समासओ भणियं। अहवावि भावलक्खण चउव्विह सद्दहणमाई ॥७५२॥

'वीरियं'ति वीर्य-बल, तच्च जीवस्य लक्षणं, तथाहि-तेन जीवो लक्ष्यते, अथवा सामर्थ्यं यत् यस्य वस्तुनश्चेतनस्याचेतनस्य वा तद्वीर्यं, तच्च विचित्ररूप, तदेव लक्षण पदार्थस्वरूपावच्छेदहेतुत्वात् वीर्यलक्षणम्, आह च भाष्यकार —

विरियति बलं जीवस्स लक्खणं ज च जस्स सामत्थं। दव्वस्स चित्तरूवं जह विरिय महोसहाईण ॥ १ ॥

तथा भावानामौदयिकादीना लक्षणं भावलक्षणं,यथा उदयलक्षण औदयिक',उपशमलक्षणस्त्वौपशमिक', अनुत्पत्तिलक्षण. क्षायिक ,मिश्रलक्षण क्षायोपशमिक.,परिणामलक्षण पारिणामिक',सयोगलक्षणः सान्निपातिक इति, अथवा भावाश्च ते लक्षणं चात्मन इति भावलक्षण, तत्र सामायिकस्य जीवगुणरूपस्य क्षयोपशमोपशमक्षयस्वभावत्वाद्वा लक्षणता, उपसहारमाह-लक्षणमेतत् त्रयोदशभेदं समासत'-सङ्क्षेपेण भणितम्, अथवापि भावस्य सामायिकस्य लक्षणं, अनुस्वारलोपोऽत्र द्रष्टव्य', चतुर्विध श्रद्धानादि ॥ एतदेव प्रतिदिदर्शयिपुराह—

सद्दहण जाणणा खलु विरई मीसा य लक्खणं कहइ। तेऽवि निसामंति तहा चउलक्खणसंजुअ चेव ॥७९३॥

इह सामायिक चतुर्विधं भवति, तद्यथा-सम्यक्त्वसामायिकं श्रुतसामायिक चारित्रसामायिक चारित्राचारित्रसामायिकं च, अस्य यथायोग लक्षण, 'सद्दहण'त्ति श्रद्धानं, लक्षणमिति योगः, सम्यक्त्वसामायिकस्य, 'जाणण'त्ति ज्ञानं ज्ञा सवित्तिरित्यर्थः, सा च लक्षण श्रुतसामायिकस्य, खलुशब्दो निश्चयतः परस्परसापेक्षत्वविशेपणार्थ , तथा 'विरइ'इति विरमण विरति'-सर्वसावद्ययोगविनिवृत्ति', सा च चारित्रसामायिकस्य लक्षणं, 'मीसा य' इति मिश्रा-विरत्यविरतिः, सा च चारित्राचारित्रसामायिकस्य लक्षणं, कथयतीत्यनेन स्वमनीषिकाऽपोहमाह, भगवान् जिन एवं कथयति, तस्य च कथयतस्तेऽपि गणधरादयो

निशामयन्ति 'तथा' तेनैव प्रकारेण चतुर्लक्षणसयुक्तमेव ॥ उक्त लक्षणद्वारम्, अधुना नयद्वार प्रतिपिपादयिपुरिदमाह—

नेगम सगह ववहारुज्जसुए चेव होइ वोद्धवे । सद्दे अ समभिरूढे एवंभूए अ मूलनया ॥ ७५४ ॥

अनेकधर्मक वस्त्ववधारणपूर्वकमेकेन नित्यत्वाद्यन्यतमेन धर्मेण प्रातिपाद्यस्य वुद्धिं नीयते-प्राप्यते येनाभिप्रायविशेषेण स ज्ञातुरभिप्रायविशेषो नय , आह च-"एगेण वत्थुणोऽणेगधम्मुणो जमवधारणेण(इट्ठेण)। नयण धम्मेण नओ होइ तओ सत्तहा सो य ॥१॥" अयमत्र तात्पर्यार्थ –इह यो नयो नयान्तरसापेक्षतया स्यात्पदलाञ्छित वस्तु प्रतिपद्यते स परमार्थत परिपूर्णं वस्तु गृह्णातीति प्रमाण एवान्तर्भवति, यस्तु नयवादान्तरनिरपेक्षतया स्वाभिप्रेतेनैव धर्मेणावधारणपूर्वकं वस्तु परिच्छेत्तुमभिप्रैति स नय , वस्त्वेकदेशपरिग्राहकत्वात्, अत एवोक्तमन्यत्र-"सवे नया मिच्छावाइणो," यत एव च नयवादो मिथ्यावादस्तत एव च जिनप्रवचनतत्त्ववेदिनो मिथ्यावादित्वपरिजिहीर्षया सर्वमपि स्यात्कारपुरस्सर भाषन्ते, न तु जातुचिदपि स्यात्कारविरहित, यद्यपि च लोकव्यवहारपथमवतीर्णा न सर्वत्र सर्वदा साक्षात् स्यात्पद प्रयुञ्जते तथापि तत्राप्रयुक्तोऽपि सामर्थ्यात् स्याच्छब्दो द्रष्टव्य , प्रयोजकस्य कुशलत्वात्, उक्त च-"अप्रयुक्तोऽपि सर्वत्र, स्यात्कारोऽर्थात् प्रतीयते । विधौ निषेधेऽन्यत्रापि, कुशलश्चेत् प्रयोजक ॥१॥" अत्र अन्यत्रापीति—अनुवादातिदेशादिवाक्येषु, ननु यदि

१ एव च स्यात्कारपुरोग सावधारण प्रमाणवाक्य, स्यात्काररहित सावधारण तु नयवाक्य, तथा च नयदुर्नयवाक्ययोरैक्यमाशङ्क्येत, परमाशङ्कितासद्धर्मव्यवच्छेदपर नयवाक्य सभवदनभिमतधर्मव्यवच्छेदपर हि दुर्नयवाक्य, स्थिते चैव श्रुतवाक्यानामेकदेशविशिष्टवस्तुप्रकाशकत्वेन नयवाक्यरूपत्व, परिपूर्णवस्तुप्रकाशकस्यैव च पूर्वापरवचनसापेक्षवस्तुप्रकाशकत्वेन स्याद्वादश्रुतरूपप्रमाणत्वं

सर्वत्र स्यात्पदप्रयोगानुसरणं तर्हि मूलत एवापागमदवधारणविधिः, परस्पर विरोधात्, तथाहि–अवधारणमन्यनिषेधपर स्याद्वादस्त्वन्यसग्रहणशील इति, तदयुक्तं, सम्यक् तत्त्वापरिज्ञानात्, स्यात्पदप्रयोगो हि विवक्षितवस्त्वनुयायिधर्मान्तर-सङ्ग्रहणशीलः,अवधारणविधिस्तु तत्तदाशङ्कितान्ययोगव्यवच्छेदादिफल', तथाहि–ज्ञानदर्शनवीर्यसुखोपेत. कि जीवो भवति किं वा नेत्याशङ्कायां प्रयुज्यते–स्याज्जीव एव, अत्र जीवशब्देन प्राणधारणनिबन्धन जीवशब्दवाच्यत्वमभिधीयते, एवकारेण यदाशङ्कित परेण जीवशब्दवाच्यत्व तस्य निषेध , स्यात्पदप्रयोगात्तु ये ज्ञानदर्शनसुखादिरूपा असाधारणा ये चामूर्त्त-त्वासङ्ख्यातप्रदेशसूक्ष्मत्वलक्षणा धर्मा धर्म्माधर्म्मगगनास्तिकायपुद्गलै. साधारणा. येऽपि च सत्त्वप्रमेयत्वधर्मित्वगुणित्वा-दय सर्वपदार्थै साधारणास्ते सर्वेऽपि प्रतीयन्ते, यदा तु ज्ञानदर्शनादिलक्षणो जीव किंवाऽन्यलक्षण इत्याशङ्का तदैवमवधा-रणविधि.–स्यात् ज्ञानादिलक्षण एव जीव , अत्र जीवशब्देन जीवशब्दवाच्यतामात्र प्रतीयते, ज्ञानादिलक्षण एवेत्यन्यलक्षण-व्युदास , स्यात्पदप्रयोगात्तु साधारणासाधारणधर्म्मपरिग्रह', यदा तु जगति जीवोऽस्ति कि वा नेत्यसम्भवाशङ्का तदैवम-वधारण–स्यादस्त्येव जीवः, अत्रापि जीवशब्देन जीवशब्दवाच्यताऽधिगति , स्यात्पदप्रयोगात् साधारणासाधारणधर्म्मपरि-ग्रहः, अस्त्येवेत्यवधारणादभावाशङ्काव्यवच्छेद , एवमन्यत्रापि साक्षात् गम्यमानतया वा स्यात्पदप्रयोगपुरःसर यथा-योगमवधारणविधि' सम्यक्प्रवचनार्थ जानानेन प्रयोक्तव्य , अवधारणाभावे तु जीवादिवस्तुतत्त्वव्यवस्थाविलोपप्रसङ्ग , तथाहि–यद्यन्यव्यवच्छेदेन ज्ञानदर्शनोपयोगलक्षणो जीव एवेति नावधार्यते तर्हि अजीवोऽपि तल्लक्षण' स्यादिति जीवा-जीवव्यवस्थाविलोपः, तथा यदि ज्ञानदर्शनोपयोगलक्षण एव जीव इत्ययोगव्यवच्छेदो नाभ्युपगम्येत ततोऽन्यत्किम-

निशामयन्ति 'तथा' तेनैव प्रकारेण चतुर्लक्षणसयुक्तमेव ॥ उक्त लक्षणद्वारम्, अधुना नयद्वार प्रतिपिपादयिषुरिदाह–

नेगम सगह ववहारुज्जसुए चेव होइ वोद्धवे । सद्दे अ समभिरूढे एवंभूए अ मूलनया ॥ ७५ ॥

अनेकधर्मक वस्त्ववधारणपूर्वकमेकेन नित्यत्वाद्यन्यतमेन धर्मेण प्रतिपाद्यस्य बुद्धि नीयते–प्राप्यते येनाभिप्रायविशेषेण स ज्ञातुरभिप्रायविशेषो नय , आह च–"एगेण वत्थुणोऽणेगधम्मुणो जमवधारणेण (इट्ठेण)। नयण धम्मेण नओ होइ तओ सत्तहा सो य ॥१॥" अयमत्र तात्पर्यार्थ –इह यो नयो नयान्तरसापेक्षतया स्यात्पदलाञ्छित वस्तु प्रतिपद्यते न परमार्थत परिपूर्णं वस्तु गृह्णातीति प्रमाण एवान्तर्भवति, यस्तु नयवादान्तरनिरपेक्षतया स्वाभिप्रेतेनैव धर्मेणावधारणपूर्वकं वस्तु परिच्छेत्तुमभिप्रैति स नय , वस्त्वेकदेशपरिग्राहकत्वात्, अत एवोक्तमन्यत्र–"सवे नया मिच्छावाइणो," यत एव च नयवादो मिथ्यावादस्तत एव च जिनप्रवचनतत्त्ववेदिनो मिथ्यावादित्वपरिजिहीर्षया सर्वमपि स्यात्कारपुरस्सर भाषन्ते, न तु जातुचिदपि स्यात्कारविरहित, यद्यपि च लोकव्यवहारपथमवतीर्णा न सर्वत्र सर्वदा साक्षात् स्यात्पद प्रयुञ्जते तथापि तत्राप्रयुक्तोऽपि सामर्थ्यात् स्याच्छब्दो द्रष्टव्य , प्रयोजकस्य कुशलत्वात्, उक्त च–"अप्रयुक्तोऽपि सर्वत्र, स्यात्कारोऽर्थात् प्रतीयते । विधौ निषेधेऽन्यत्रापि, कुशलश्चेत् प्रयोजक ॥ १ ॥" अत्र अन्यत्रापीति–अनुवादातिदेशादिवाक्येषु, ननु यदि

१ एव च स्यात्कारपुरोग सावधारण प्रमाणवाक्य, स्यात्काररहित सावधारण तु नयवाक्य, तथा च नयदुर्णयवाक्ययोरैक्यमाशङ्क्येत, परमाशङ्कितासद्धर्मव्यवच्छेदपर नयवाक्य सभवदनभिमतधर्मव्यवच्छेदपर हि दुर्नयवाक्य, स्थिते चैव श्रुतवाक्यानामेकदेशविशिष्टवस्तुप्रकाशकत्वेन नयवाक्यरूपत्व, परिपूर्णवस्तुप्रकाशकस्यैव च पूर्वापरवचनसापेक्षवस्तुप्रकाशकत्वेन स्याद्वादश्रुतरूपप्रमाणत्व

गेकान्तविषय स्यादि" ति, अत्र टीकाकारेण व्याख्या कृता–नयोऽपि–नयप्रतिपादकमपि वाक्यं, न केवल प्रमाणवाक्य-मित्यपिशब्दार्थः, तथैव–स्यात्पदप्रयोगप्रकारेणैव सम्यगेकान्तविषय स्यात्, यथा स्यादस्त्येव जीव इति, स्यात्पदप्रयोगा-भावे तु मिथ्यैकान्तगोचरतया दुर्नय एव स्यादिति, तदेतदयुक्तं, प्रमाणनयविभागाभावप्रसक्तेः, तथाहि–स्याज्जीव एवेति किल प्रमाणवाक्यं, स्यादस्त्येव जीव इति नयवाक्यं, एतच्च द्वयमपि लघीयस्त्रय्यलङ्कारे साक्षादकलङ्केनोदाहृत, अत्र चोभयत्राप्यविशेष , तथाहि–स्याज्जीव एवेत्यत्र जीवशब्देन प्राणधारणनिबन्धना जीवशब्दवाच्यताप्रतिपत्तिः, अस्ती-त्यनेनोद्भूताकारशब्दप्रयोगादजीवशब्दवाच्यतानिषेधः, स्याच्छब्दप्रयोगतोऽसाधारणसाधारणधर्माक्षेपः, स्यादस्त्येव जीव इत्यत्र जीवशब्देन जीवशब्दवाच्यताप्रतिपत्तिरस्तीत्यनेनोद्भूतविवक्षितास्तित्वावगति· एवकारप्रयोगात्तु यदाशङ्कितं सक-लेऽपि जगति जीवस्य नास्तित्व तद्व्यवच्छेद , स्यात्पदप्रयोगाद् साधारणासाधारणप्रतिपत्तिरित्युभयत्राप्यविशेष एव, तथा च सिद्धव्याख्याता न्यायावतारविवृतौ स्यादस्त्येव जीव इति प्रमाणवाक्यमुपन्यस्तवान्, तथा च तद्गतो ग्रन्थः "यदा तु प्रमाणव्यापारमविकलं परामृश्य प्रतिपादयितुमभिप्रयन्ति तदा अङ्गीकृतगुणप्रधानभावाऽशेषधर्मसूचककथ-ञ्चित्पर्यायस्याच्छब्दविभूषितया सावधारणया च वाचा स्यादस्त्येव जीव इत्यादिकया (वदेत् त) तोऽयं स्याच्छब्दसंसूचिताभ्य-न्तरीभूतानन्तधर्मकस्य साक्षादुपन्यस्तजीवशब्दक्रियाभ्या प्रधानीकृतात्मभावस्यावधारणव्यवच्छिन्नतदसम्भवस्य वस्तुन सन्दर्शकत्वात् सकलादेश इत्युच्यते, प्रमाणप्रतिपन्नसम्पूर्णार्थकथनमिति यावदि"त्यादि, तस्मादस्मदुक्तैव प्रमाणनयव्य-वस्था समीचीना, यथा यो नाम नयो नयान्तरसापेक्षः परमार्थतः स्यात्पदप्रयोगमभिलषन् सम्पूर्ण वस्तु गृह्णातीति प्रमा-

ध्यजीवानुगतमजीवसाधारण वा तथालक्षणमाशङ्क्येत, तथा च जीवेतरविभागपरिज्ञानाभाव , ततो यथा गम्यमाना-
त्वमिच्छता सर्वत्र स्यात्पदप्रयोग साक्षात् गम्यो वाऽनुश्रियते तथा यथायोगमवधारणविधिरपि, अन्यथा यथावस्थितव-
स्तुतत्त्वप्रतिपत्त्यनुपपत्ते ,न चावधारणविधि. सिद्धान्ते नानुमत इति वक्तव्य, तत्र तत्र प्रदेशेऽनेकशोऽवधारणविधिदर्शनात्,
तथाहि–"किमिय भते ! कालोत्ति पवुच्चइ ?, गोयमा ! जीवा चेव अजीवा चेव" त्ति, स्थानाङ्गेऽप्युक्तम्–"जदत्थि च ण
लोए त सव्व दुप्पडोयार, तजहा–जीवा चेव अजीवा चेव" तथा "जह चेव उ मोक्खफला, आणा आराहिया जिणिंदाण"-
मित्यादि, या त्ववधारणी भाषा प्रवचने निषिध्यते सा कचित् तथारूपवस्तुतत्त्वनिर्णयाभावात् कचिदेकान्तप्रतिपादिका
वा, न तु सम्यग्यथावस्थितवस्तुतत्त्वनिर्णये स्यात्पदप्रयोगावस्थायामिति । दिगम्बरी त्वियं प्रमाणनयपरिभाषा–सम्पूर्ण-
वस्तुकथन प्रमाणवाक्य, यथा स्याज्जीव स्याद्धर्मास्तिकाय इत्यादि, वस्त्वेकदेशकथन नयवाद , तत्र यो नाम नयो नया-
न्तरसापेक्ष स नय इति वा सुनय इति वोच्यते, यस्तु नयान्तरनिरपेक्षः स दुर्नयो नयाभास इति, तथा चाहाकलङ्क –
"भेदाभेदात्मके ज्ञेये, भेदाभेदाभिसन्धय' । यतोऽपेक्षानपेक्षाभ्या, लक्ष्यन्ते नयदुर्नयाः ॥ १ ॥" अस्याः कारिकाया लेशतो
व्याख्या–भेदो–विशेषोऽभेद –सामान्यं तदात्मके, सामान्यविशेषात्मके इत्यर्थः, ज्ञेये–प्रमाणपरिच्छेद्ये वस्तुनि ये भेदाभेदा-
भिसन्धय –सामान्यविशेषविषया· पुरुषाभिप्रायाः अपेक्षानपेक्षाभ्या लक्ष्यन्ते ते यथासङ्ख्य नयदुर्नया ज्ञातव्या , किमु-
क भवति ?–विशेषसाकाङ्क्षः सामान्यग्राहको वाऽभिप्रायः सामान्यसापेक्षो विशेषग्राहको वा नय , इतरेतराकाङ्क्षारहि-
तस्तु दुर्नय , नयचिन्तायामपि च ते दिगम्बरा स्यात्पदप्रयोगमिच्छन्ति, तथा चाकलङ्क एव प्राह–"नयोऽपि तथैव सम्य-

मात्रनिबन्धन सदिति प्रत्ययस्तर्हि स गुणादिषु न भवेत्, तत्र द्रव्यत्वाभावात्, गुणमात्रनिबन्धनत्वे द्रव्यादिषु न स्यात्, तत्र गुणत्वाभावात्, एव सर्वत्रापि भावनीयम्, ततोऽस्ति द्रव्यादिभ्यो व्यतिरिक्त महासत्ताख्यं नाम सामान्यं यद्वशादविशेषेण सर्वत्र सदिति प्रत्यय इति, तथा नवसु द्रव्येषु द्रव्य द्रव्यमित्यनुगताकारप्रत्ययदर्शनात् द्रव्यत्व नामावान्तरसामान्य प्रतिपत्तव्यम्, एवं गुणत्वकर्म्मत्वगोत्वाश्वत्वादीन्यपि, अमूनि चावान्तरसामान्यानि सामान्यविशेषा इत्युच्यन्ते, यत एतानि स्वस्वाधारविशेषेषु अनुगताकारप्रत्ययवचनहेतुत्वात् सामान्यानि विजातीयेभ्यो व्यावर्त्तमानत्वाच्च विशेषा इति सामान्यविशेषा, तथा तुल्यजातिगुणक्रियाधाराणा नित्यद्रव्याणा परमाण्वाकाशदिगादीनामत्यन्तव्यावृत्तिबुद्धिहेतुभूता विशेषा, ते च योगिनामेव प्रत्यक्षा अस्मदादीना त्वनुमेया॰, तथाहि–तुल्यजातिगुणक्रियाधारा परमाणवो व्यावर्त्तकधर्मसम्बन्धिनो व्यावृत्तिप्रत्ययविषयत्वात् मुक्ताफलाभास्यन्तर्गतचिह्नमुक्ताफलवत्, ये चावान्तरविशेषा घटपटादीनामितरेतरव्यावर्त्तनक्षमास्ते आबालगोपालाङ्गनादिजनानामपि प्रत्यक्षा॰, एते च महासामान्यावान्तरसामान्यान्तविशेषावान्तरविशेषा परस्परविशकलितस्वरूपा, तथैव प्रतिभासमानत्वात्, तथाहि–न सामान्यग्राहिणि विज्ञाने विशेषावभासो नापि विशेषग्राहिणि सामान्यावभास॰ तत परस्परविनिर्लुण्ठितस्वरूपा॰, तथा चात्र प्रयोग –यद्यथाऽवभासते तत्तथाऽभ्युपगन्तव्य, यथा नीलं नीलतया, अवभासन्ते च परस्परविसकलितस्वरूपाः सामान्यविशेषा इति नैगम, नन्वेष यदि सामान्यविशेषाभ्युपगमपरस्तर्हि यत्सामान्य तद्द्रव्यं ये तु विशेषास्ते पर्याया इति परमार्थतो द्रव्यास्तिकपर्यायास्तिकनयमतावलम्बित्वात् सम्यग्दृष्टिरेव, प्रतिपन्नजिनमतत्वात्, तथाविधसम्यग्जैनसाधुवत्,

णान्तर्भावी, नयान्तरनिरपेक्षस्तु नयो नय , स च नियमान्मिथ्यादृष्टिरेव, सम्पूर्णवस्तुग्राहकत्वाभावादिति, ते च नया मूलभेदापेक्षया सप्त, तथा चाह–नैगम सङ्ग्रह व्यवहार ऋजुसूत्रश्चैव भवति बोद्धव्यः शब्दश्च समभिरूढ एवम्भूतश्चेति मूलनया इति गाथासमुदायार्थो निगदसिद्ध ॥ अवयवार्थं तु प्रतिनय नयाभिधाननिरुक्तिद्वारेण प्रतिपादयति—

णेगेहिं माणेहिं मिणइत्ती णेगमस्स नेरुत्ती । सेसाणं तु नयाणं लक्खणमिणमो सुणह वोच्छं ॥ ७५५ ॥

न एक नैक, नायं नञ्, किन्तु न इति 'अन् स्वरे' इति न भवति, प्रभूतानीत्यर्थं , ततो नैकैः–प्रभूतैः(?)... महासामान्यावान्तरसामान्यविशेषादिविषयै प्रमाणैर्मिमीते–परिच्छिनत्ति वस्तुजातमिति नैगम', पृषोदरादय इतीष्टरूप-निष्पत्ति , तथा चाह–'इति' इय नैगमस्य निरुक्ति -निर्वचन, उपलक्षणमेतत्, तेन अन्यथाऽपि नैगमशब्दव्युत्पत्ति परिभावनीया, तद्यथा–निश्चितो गमो निगमः–परस्परविविक्तसामान्यादिवस्तुग्रहण स एव प्रज्ञादेराकृतिगणतया स्वार्थिकाणप्रत्ययविधानात् नैगम , यदिवा निगम्यन्ते–परिच्छिद्यंते इति निगमास्तेषु भवो योऽभिप्रायो नियतपरिच्छेद-रूप स नैगम , अथवा गमा –पन्थानो नैके गमा यस्य स नैगम ,पृषोदरादित्वात् ककारस्य लोप , बहुविधवस्त्वभ्युपग-मपर इत्यर्थ , तथाहि–एष सत्तालक्षणं महासामान्यम्, अवान्तरसामान्यानि च द्रव्यत्वगुणत्वकर्मत्वादीनि, तथा अन्त्यान् विशेषान् सकलासाधारणरूपान् अवान्तरविशेषाश्च पररूपव्यावर्त्तनक्षमान् सामान्यादत्यन्तविनिर्लुठितस्वरूपान् प्रतिपद्यते, यतोऽसावेवमाह–सविशिष्टा किल पदार्थव्यवस्थितय', तत्र सर्वेष्वपि पदार्थेषु द्रव्यादिरूपेषु सत्सदित्यविशेषेण प्रत्यय उपजा-यते, वचनं च, न चैते तथारूपे प्रत्ययवचने द्रव्यादिमात्रनिबन्धने, द्रव्यादीनामसर्वव्यापकत्वात्, तथाहि–यदि द्रव्य-

मात्रनिबन्धन सदिति प्रत्ययस्तर्हि स गुणादिषु न भवेत्, तत्र द्रव्यत्वाभावात्, गुणमात्रनिबन्धनत्वे द्रव्यादिषु न स्यात्, तत्र गुणत्वाभावात्, एव सर्वत्रापि भावनीयम्, ततोऽस्ति द्रव्यादिभ्यो व्यतिरिक्त महासत्ताख्यं नाम सामान्य यद्वशादविशेषेण सर्वत्र सदिति प्रत्यय इति, तथा नवसु द्रव्येषु द्रव्य द्रव्यमित्यनुगताकारप्रत्ययदर्शनात् द्रव्यत्व नामावान्तरसामान्य प्रतिपत्तव्यम्, एवं गुणत्वकर्म्मत्वगोत्वाश्वत्वादीन्यपि, अमूनि चावान्तरसामान्यानि सामान्यविशेषा इत्युच्यन्ते, यत एतानि स्वस्वाधारविशेषेषु अनुगताकारप्रत्ययवचनहेतुत्वात् सामान्यानि विजातीयेभ्यो व्यावर्त्तमानत्वाच्च विशेषा इति सामान्यविशेषाः, तथा तुल्यजातिगुणक्रियाधाराणा नित्यद्रव्याणा परमाण्वाकाशदिगादीनामत्यन्तव्यावृत्तिबुद्धिहेतुभूता विशेषा., ते च योगिनामेव प्रत्यक्षा अस्मदादीना त्वनुमेया , तथाहि–तुल्यजातिगुणक्रियाधाराः परमाणवो व्यावर्त्तकधर्म्मसम्बन्धिनो व्यावृत्तिप्रत्ययविषयत्वात् मुक्ताफलाभास्यन्तर्गतचिह्नमुक्ताफलवत्, ये चावान्तरविशेषा घटपटादीनामितरेतरव्यावर्त्तनक्षमास्ते आबालगोपालाङ्गनादिजनानामपि प्रत्यक्षा., एते च महासामान्यावान्तरसामान्यान्तविशेषावान्तरविशेषा' परस्परविशकलितस्वरूपा , तथैव प्रतिभासमानत्वात्, तथाहि–न सामान्यग्राहिणि विज्ञाने विशेषावभासो नापि विशेषग्राहिणि सामान्यावभासः तत परस्परविनिर्लुण्ठितस्वरूपाः, तथा चात्र प्रयोग –यद्यथाऽवभासते तत्तथाऽभ्युपगन्तव्य, यथा नीलं नीलतया, अवभासन्ते च परस्परविसकलितस्वरूपाः सामान्यविशेषा इति नैगम., नन्वेष यदि सामान्यविशेषाभ्युपगमपरस्तर्हि यत्सामान्यं तद्द्रव्यं ये तु विशेषास्ते पर्याया इति परमार्थतो द्रव्यास्तिकपर्यायास्तिकनयमतावलम्बित्वात् सम्यग्दृष्टिरेव, प्रतिपन्नजिनमतत्वात्, तथाविधसम्यग्जैनसाधुवत्,

करणात्, तथा च परिहितपरिजीर्णपरिधाना काचित् युवति कोलिकं प्रत्येवमाचष्टे—त्वर कोलिक! नग्नाऽहं वर्त्ते इति, तत संयमयोगस्फातिनिमित्त तथारूपाणि वस्त्राणि धारयतो यते सदा ममत्वरहितस्य कथ न परीपहसहनम्?, आह च—"संयमयोगनिमित्त परिजुन्नादीणि धारयतस्स। कह न परिसहसहण जइणो सइ निम्ममत्तस्स? ॥१॥" (वि १०६०) अथ सूत्रे 'नगिणस्स वावि मुडस्से' त्यादिना साक्षान्नग्नत्वमभिहित, परिजीर्णाल्पमूल्यवस्त्रपरिधाने तु न तदनुपचरित भवति, उपचरिते च नग्नत्वे परीषहसहनमप्युपचरितमेव प्राप्नोति, न चोपचारादर्थसिद्धि, नहि माणवको दहनोपचारादाधीयते पाके इति प्रतीतमेतत्, तदप्यशोभन, सम्यक् जिनवचनापरिज्ञानात्, न खलु क्षुत्परीपहसहनमप्युपचरितमेव प्राप्नोति, पिपासापरीपहसहन च, सर्वथा वाऽशनपानप्रतिषेधत उपपद्येते, किन्त्वनेपणीयपरित्यागाद्, अन्यथा भगवतामप्यर्हतामजितपरीपहत्वप्रसक्ति, तेषामप्येषणीयान्नपानोपादानात्, ततो यथैषणीयान्नपानपरिभोगत· क्षुत्पिपासापरीपहसहनमेव परिजीर्णाल्पमूल्यवस्त्रपरिधानेऽप्यचेलपरीपहसहतेति, उक्त च—"जइ चेलभोगमेत्तादजिताचेलयपरीसहो तेण । अजियदिगिंछाइपरीसहोऽवि भत्ताइभोगातो ॥ १ ॥ एव तुह न जियपरीसहा जिणिदादि सव्वहाऽऽरुण्ण । अहवा जो भत्तादिसु स विही चेलेवि किं नट्ठो? ॥ २ ॥ जह भत्तादि विसुद्ध, रागद्दोसरहिओ निसेवंतो । विजियदिगिंछाइपरीसहो मुणी सपडियारोऽवि ॥ ३ ॥ तह चेल परिसुद्ध रागद्दोसरहिओ सुयविहीए। होइ जियाचेलपरीसहो मुणी सेवमाणोऽवि ॥ ४ ॥" (वि २५९४-९७) स्यादेतत्—यदि परिजीर्णाल्पवस्तुपरिभोगेऽप्यचेलकपरीपह सोढोऽभ्युपगम्यते तत काणकुण्टादियुवतिरपि न परमार्थतो युवति, परिपूर्णयुवतिलक्षणायोगात्, ततस्तत्परिभोगेऽपि स्त्रीपरीपह सोढो भवेत्,

न्यायस्योभयत्रापि तुल्यत्वात्, न, सूत्रान्तरेण स्त्रीपरिभोगस्य सर्वस्यापि प्रतिषेधनात्, तच्च सूत्रान्तरमिदम्,—"नवि किंचिप्पडिसिद्ध नऽणुन्नाय वावि जिणवरिंदेहि। मोत्तु मेहुणभावं न विणा सो रागदोसेहि ॥ १ ॥" ( धर्म १०६४ ) ततो नातिप्रसङ्गदोष, उक्त च—"सिय पात्रई अणिट्ठ एवं इत्थीपरीसहपसगा। नो सुत्तंतरबाहानिवारणादिह पसगस्स ॥ १ ॥" ( धर्म १०६३ ) न च भगवता प्रतिक्रुष्ट वस्त्रम्, उपधिप्रमाणस्य कल्पाध्ययनादिषु साक्षादभिधानात्, न च यतयो गृहस्था इव वस्त्राणि परिभुञ्जते, किन्तु लोकरूढप्रकारादन्यप्रकारेण, कच्छाबन्धाभावात् कूर्पराभ्यामग्रभाव एव चोलपट्टकधरणात् मस्तकोपरि प्रावरणाद्यभावाच्च, ततो न गृहिलिङ्गम्, अथ गृहस्थैरपि परिभोगात् गृहिलिङ्गं, यद्येव तत करचरणादयोऽपि गृहिलिङ्ग, तेषामपि गृहस्थेषु भावात्, ततस्तेषामपि परित्याग॰ कर्त्तव्यः, अथ करचरणादिपरित्यागे देहाभावस्तदभावे च परलोकासाधनमिति तदपरित्याग, ननु वस्त्रस्याप्यभावे तृणग्रहणादिप्रसक्तेः परलोकसाधनाभाव समान एवेति यत्किञ्चिदेतत्,आह च—"गिहिलिगंपि न एत एगंतेणं तदन्नहाधरणे। होति य कहिचि नियमा करचरणाईवि गिहिलिंगं ॥ १ ॥ तेसि परिच्चागातो देहाभावे कहं नु परलोगो? । नणु वत्थस्सवि चाए तणगहणाईहि तुल्लमिण ॥ २ ॥" ( धर्म १०६८–६ ) अथास्माक युष्माकं चार्हन्तो गुरव॰, भगवन्तश्चार्हन्तोऽचेलास्ततोऽचेलत्वमेवास्माक युक्त्युपपन्न, न वस्त्रपरिधारणं, शिष्याणा गुरुलिङ्गप्रतिपत्तेरर्चितत्वात्, उक्तच—"जारिसयं गुरुलिगं सीसेणवि तारिसेण होयव्व। नहु होइ बुद्धसीसो सेयवडो नग्गखमणो वा ॥ १ ॥" (धर्म ११०९) ननु यदि भगवन्तो गुरव प्रमाणं तर्हि तदुपदेश॰ कर्त्तव्यः, भगवदुपदेशश्चायं—निरुपमधृतिसहननाद्यतिशयोपेतेनाचेलेन भवितव्यं, न निरतिशयेन,

अतिशयविकलश्च भवान्, ततो मा भूस्त्व निरतिशय सवस्त्रचेल, उपदेशाद्धि गुरूणा कार्यसिद्धिर्न वेपचरितमात्रानुष्ठानात्, न खलु रोगी वैद्यस्य वेप चरित वाऽनुकुर्वन्नरोगीभवति, किन्तूपदेशात्, आह च भाष्यकृत्—"अरहता जमचेला तेणाचेलत्तण जइ मयं ते। तो तव्वयणातोच्चिय निरतिसओ होहि माऽचेलो ॥ १ ॥ रोगी जहोवएस करेइ वेज्जस्स होयऽरोगी य। न उ वेस चरिय वा करेइ न य पउणइ करेंतो ॥ २ ॥ तह जिणवेज्जाएस कुणमाणोऽवेइ कम्मरोगातो। नउ तन्नेवत्थधरो तेसि आएसमकरेंतो ॥ ३ ॥" ( वि २५८५-७ ) अथोपदिष्टो भगवद्भिर्जिनकल्पस्तत. सोऽस्माभिराश्रीयते, ननु यदि जिनोपदेशात्तस्याश्रयणं तत एतदपि जिनोपदेशात् प्रतिपत्तव्यं–ये उत्तमधृतिसहनना. पूर्वविद' सातिशया गच्छे कृतपरिकर्माणस्ते जिनकल्प प्रतिपद्यन्ते, न शेपाः, उक्त च–"उत्तमधिइसघयणा पुव्वविदोऽतिसयिणो सया काल। जिणकप्पियादिकप्पं कयपरिकम्मा पवज्जंति ॥१॥" (वि २५९१) तथा व्यवच्छिन्न सम्प्रति जिनकल्प इत्येतदपि, तथा चोक्तम्—"मणपरमोहिपुलाए आहारग खवग उवसमे कप्पे । सजमतियकेवलसिज्झणा य जवुम्मि वोच्छिन्ना ॥ १ ॥" ( वि २५९३ ) तत कथ भवतो जिनकल्पाश्रयणम्?, अथ यथा तदुपदेश क्रियते तथा तद्गतवेषचरितानुकारोऽपि, तत्रेदं प्रष्टव्य–तद्गतवेषचरितानुकार्ये किं सर्वथा उत देशतः?, तत्र यद्याद्यः पक्ष' सोऽसम्भवी, तीर्थकृतामेव तीर्थकरगुणोपेतता, न प्राकृतगुणयुक्ताना युष्मादृशा, तीर्थकरगुणाश्चेमे–निरुपमधृतिसहनना मतिश्रुतावधिमनःपर्यायज्ञानिन' सत्त्वसम्पन्ना अच्छिद्रपाणिपात्रा देवदानवैरप्यक्षोभ्या सततमप्रमादिनो जितपरीपहा, ततस्ते वस्त्रपात्राद्युपकरणरहिता अपि न यथोक्त दोपमाप्नुवन्तीति न कुर्वते वस्त्रादिग्रहण, केवलमस्माभिः सवस्त्रो

धर्म्मः प्ररूपयितव्य इति अभिनिष्क्रमणकाले शक्रेण समर्प्पितमेकं देवदूष्य प्रतिगृह्णन्ति, उक्तं च–"निरुवमधिइसंघयणा चउनाणाऽतिसयसत्तसपण्णा । अच्छिद्दपाणिपत्ता जिणा जियपरीसहा सवे ॥ १ ॥ तम्हा जहुत्तदोसे पावंति न वत्थपत्तरहियावि । तदसाहणंति तेसिं तो तग्गहणं न कुवंति ॥ २ ॥ तहवि गहिएगवत्था सवत्थतित्थोवएसणत्थंति । अभिनिक्खमंति सवे तम्मि चुएऽचेलया होंति ॥ ३ ॥" (वि २५८१-३) तत कथ तैः सह सर्वसाम्यं प्रतिपत्तु शक्यम् ?, अन्यच्च–सर्वसाम्यप्रतिपत्तौ तीर्थकरैरिव न परोपदेशोऽपेक्षणीय, नापि छद्मस्थैः सद्भि परेभ्य उपदेष्टव्यं, न च शिष्यवर्गो दीक्षणीय इत्यापन्नस्तीर्थव्यवच्छेद इति नैष पक्षः, आह च–"न परोवएसवसया न य छउमत्था परोवएसंपि । देंति नय सीसवग्ग दिक्खंति जिणा जहा सवे ॥ १ ॥ तह सेसेहिवि सव, कज्जं जइ तेहिँ सवसाहम्म । एवं च कतो तित्थं ? न चेदचेलोत्ति को गाहो ? ॥ २ ॥"(वि २५८६–७) देशपक्षस्त्वस्माभिरभ्युपगत एव, वेषानुकारस्य लोचकरणमात्रेण चरितानुकारस्यैपणीयाहारपरिभोगानियतवासादिना (च) क्रियमाणत्वात्, यदप्युक्तम्–'वस्त्रं च ग्रन्थ' इत्यादि, तदपि न सुन्दर, सयमोपकारितया वस्त्रे धर्मोपकरणत्वेन ग्रन्थत्वायोगात्, तथाहि–यद्धर्मोपकरणं न स ग्रन्थ, धर्मोपकरण च वस्त्रमिति व्यापकविरुद्धव्याप्तोपलब्धि', ग्रथत्वं हि बन्धुहेतुत्वेन व्याप्त, ग्रश्नाति जीवं कर्म्ममलेनेति ग्रन्थ इति व्युत्पत्तेः, कर्म्मबन्धहेतुताप्रतिपक्षभूतेन च कर्म्ममलापगमहेतुत्वेन व्याप्तं धर्मोपकरणत्वं, तथाहि–धर्म सम्यग्दर्शनज्ञानचारित्ररूपः, स उपक्रियते–उपष्टभ्यते स्फीतिं नीयते इतियावद् अनेनेति धर्मोपकरणं, यच्च सम्यग्दर्शनादिकं धर्ममुपष्टभ्नाति तत् परपरया कर्म्ममलापगमहेतु', सम्यग्दर्शनादिप्रभावत सकलकर्मापगमलक्षणस्य मोक्षस्याभ्युपगमात्, वस्त्रमपि च शुभध्या-

नहेतुतया प्राणिरक्षकतया च धर्मोपष्टम्भकम्, अतो वस्त्रे यत् ग्रन्थत्वस्य व्यापक कर्मबन्धहेतुत्व तस्य विरुद्ध यत्कर्ममलापगमनिबन्धनत्व तेन व्याप्तस्य धर्मोपकरणत्वस्योपलब्धे ग्रन्थत्वप्रतिषेध , अथ वस्त्रपरिग्रहाभ्युपगमे साधूना परस्पर शुभेतरवस्त्रविशेषदर्शनतो मात्सर्यादिरुपजायते, तस्करादीना च तद्विषयो लोभादि , अत कपायहेतुत्वात् ग्रन्थ', प्रयोगश्च–यत् कपायहेतुस्तत् ग्रन्थो यथा स्वापतेय, कपायहेतुश्च वस्त्रमिति, तदसमीचीन, हेतोरसिद्धत्वात्, तथाहि–न भावितजिनवचनाना साधूना शुभेतरवस्त्रविशेषदर्शनेऽपि मात्सर्यादि , इतरेषा च तत्सम्भव आहारेऽपि सम , तस्करादीनामपि च परिजीर्णाल्पमूल्यवस्त्रविषये न लोभादि, क्षुद्रसत्त्वाना तु तत्सम्भवे पिच्छिकादिष्वपि समान, तस्मात् तत्त्वतो न कपायहेतुता, अनैकान्तिकोऽपि चाय हेतु , भगवत सङ्गमकगोशालादीन् प्रति धर्म्मपराणा जिनमतस्य च प्रत्यनीकान् प्रति कपायहेतुत्वेऽपि ग्रन्थत्वायोगात्, उक्त च–"अत्थि य किं किंचि जए जस्स व कस्स व कसायबीयं ज । वत्थु न होज्ज ? एव धम्मोवि तुमे न घेत्तवो ॥ १ ॥ जेण कसायनिमित्तं जिणोऽवि गोसालसगमाईणं । धम्मो धम्मपराविय पडिणीयाण व जिणमय च ॥ २ ॥" ( वि २५५९-६० ) तस्माद्यत्किञ्चिदेतत्, एव स्थविरैस्तस्य कथनं कृतं ॥ अमुमेवार्थमुपसञ्जिघृक्षुराह–

रहवीरपुर नगर दीवगमुज्जाणमज्जकण्हे य । सिवभूइस्सुवहिम्मी पुच्छा थेराण कहणा य ॥ १४६ ॥ (मू भा )

रथवीरपुरे नगरे दीपक नाम उद्यान, तत्रार्यकृष्णो नामाचार्य समवसृत , तत्र शिवभूतेर्जिनकल्पिकप्ररूपणावसरे उपधौ पृच्छा, स्थविराणा च–आर्यकृष्णाना कथनेति गाथासक्षेपार्थ , भावार्थ प्रागेवोक्त । स च शिवभूतिस्तथा स्थविरै

प्रज्ञाप्यमानोऽपि मिथ्यात्वोदयात् कुलिङ्गभावो जिनमतमश्रद्धधानश्चीवराणि परित्यज्योपाश्रयाद्विनिर्गत', तस्योत्तरा भगिनी, सा उद्याने स्थित वन्दितुमागता, त च तथाभूतं दृष्ट्वा तयापि चीवराणि तदनुरागेण परित्यक्तानि, ततो द्वावपि तौ भिक्षार्थ प्रविष्टौ, गणिकया च तदवस्था दृष्टा, साऽचिन्तयत्–नूनमेव स्त्रीणा बीभत्स रूपं दृष्ट्वा लोकोऽस्माकं विरक्तो भविष्यतीति, ततस्तया सा परिपूर्णं परिधापिता, सा नैच्छदिति मुक्तवती, ततो बलादपि तस्या उरसि कटिप्रदेशे चैकं वस्त्र सन्दधे, तदपि त्यजन्ती भ्रात्रा कथमपि दृष्ट्वा भणिता–तिष्ठत्वेतत्तव देवतया दत्तम्, आह च भाष्यकृत्–"तस्स भगिणी समुज्झियवत्था तह चेव तदणुरागेण । सपत्थिया नियत्था तो गणियाए पुणो मुयइ ॥ १ ॥ तीए पुणोवि बद्धो-रसेगवत्था तयपि छड्डेंती । अच्छउ ते तेणं चिय समणुण्णाया धरेसी य ॥ २ ॥" ( वि २६०७-८ ) तेन शिवभूतिना द्वौ शिष्यौ प्रव्राजितौ–कौण्डिन्य. कोट्टवीरश्च, ततः परम्परास्पर्श' समुत्पन्न., उक्तंच–"कोडिन्नकोट्टवीरे पव्वावेसी य दोन्नि सो सीसे । तत्तो परपराफासतो व सेसा समुप्पन्ना ॥ १ ॥" ( वि २६०९ ) एवं बोटिका उत्पन्नाः, अमुमेवार्थ मूलभाष्यकारः सञ्जिहीर्षुराह—

ऊहाए पन्नत्तं बोडिअ सिवभूइउत्तराहि इमं । मिच्छादंसणमिणमो रहवीरपुरे समुप्पन्नं ॥ १४७ ॥ (मू भा)

ऊहया–स्वतर्कबुद्ध्या प्रज्ञप्तं-प्रणीत बोटिकं शिवभूत्युत्तराभ्याम् 'इणमो'त्ति एतच्च मिथ्यादर्शनं क्षेत्रतो रथवीरपुरे समुत्पन्नम् ।

बोडिअसिवभूईओ बोडिअलिंगस्स होइ उप्पत्ती । कोडिन्नकुट्टवीरा परपराफासमुप्पन्ना ॥ १४८ ॥ ( मू भा )

वोटिकशिवभूते' सकाशात् वोटिकलिङ्गस्य–वोटिकदृष्टेर्भवत्युत्पत्तिः, वर्त्तमाननिर्देशप्रयोजनं प्राग्वत्, पाठान्तरं वा 'वोडियलिंगस्स आसि उप्पत्ती', ततः कौण्डिन्यश्च कोट्टवीरश्च कौण्डिन्यकोट्टवीर समाहारो द्वन्द्वस्ततः परम्परास्पर्शम्–आचार्यशिष्यसम्बन्धलक्षणमधिकृत्योत्पन्ना–सञ्जाता, वोटिकदृष्टिरिति वाक्यशेषः॥ सम्प्रति निह्नवचक्तव्यता निगमयन्नाह–

एव एए कहिआ ओसप्पिणिए उ निण्हता सत्त। वीरवरस्स पवयणे सेसाणं पवयणे नत्थि ॥ ७८४ ॥

एवम्–उक्तेन प्रकारेण एते अनन्तरोक्ता कथिता प्रतिपादिता अस्यामवसर्पिण्या निन्हवा' सप्त, अष्टमस्तु वोटिकः तुशब्दसमुच्चितो, वीरवरस्य भगवत प्रवचने–तीर्थे, शेषाणा तु तीर्थकृतां प्रवचने नत्थित्ति प्राकृतत्वान्नासीरन् निन्हवाः ॥

मुत्तूणमेसिमिक्क सेसाणं जावजीविया दिट्ठी। इक्किक्कस्स य इत्तो दो दो दोसा मुणेअव्वा ॥ ७८५ ॥

मुक्त्वा एपामेकं गोष्ठामाहिल निन्हवाना शेषाणा–जमालिप्रभृतीना प्रत्याख्यानमङ्गीकृत्य यावज्जीविका दृष्टिरासीत्, न ते प्रत्याख्यानं गोष्ठामाहिल इवापरिमाणमिच्छुरिति भावना, आह–प्रकरणादेवेदमवसीयते किमर्थमस्योपन्यासः ?, उच्यते, प्रतिदिवसोपयोगेन प्रत्याख्यानस्यातीवोपयोगित्वात्, मा भूत् कश्चित्तथैव प्रतिपद्यते, ततः प्रज्ञाप्यते–निन्हवानामपि प्रत्याख्यानविपये इयमेव दृष्टिरिति, 'एत्तो'त्ति प्राकृतत्वादमीषा मध्ये एकैकस्य निन्हवस्य द्वौ द्वौ दोषौ ज्ञातव्यौ, मुक्त्वैकमिति वर्त्तते, तथाहि–बहुरता जीवप्रदेशिकान् प्रत्यूचु-भवन्तो द्वाभ्या कारणाभ्या मिथ्यादृष्टय', तत्रैकमिद यद्भणथ एक. प्रदेशो जीव इति, द्वितीय क्रियमाण कृतमिति, जीवप्रदेशिका अपि बहुरतान् प्रत्यवादिषु –यूयमपि कारणद्वयेन मिथ्यादृष्टय , एक तावदिद यद्वदथ क्रियमाणमकृत ( द्वितीय च चरमप्रदेश ) जीव इति प्रतिपद्यध्वे,

एवं शेषाणामपि परस्पर भावनीयं, गोष्ठामाहिलमधिकृत्य पुनरेकैकस्य त्रयो दोषा, तथाहि–बहुरतान् प्रति गोष्ठामा-हिलोऽब्रवीत्–कारणत्रयाद् भवन्तो मिथ्यादृष्टय, तत्र–एकमिदं यत्कृत कृतमिति (यूयं) वदतेति, द्वितीयं स्पृष्ट बद्धं कर्म्म, तृतीयमपरिमाण प्रत्याख्यानमिति, बहुरता अपि तं प्रत्यवोचन्, भवानपि कारणत्रयान्मिथ्यादृष्टिः–एकं तावदिदं यत् क्रियमाण कृतमिति वदति, द्वितीयं स्पृष्टमबद्ध कर्म्म, तृतीय सपरिमाणं प्रत्याख्यानमिति, एवं सर्वान् प्रति योजनीयम्, अन्ये त्वाहु–एकैकस्य द्वौ द्वौ दोषावेवं वेदितव्यौ, एकं तावत्स्वय विप्रतिपन्ना द्वितीयं परानपि व्युद्ग्राहयन्तीति ॥ नन्वेता दृष्टय ससाराय आहोस्विदपवर्गायेत्याशङ्कानिवृत्त्यर्थमाह–

सत्तेया दिट्ठीओ जाइजरामरणगब्भवसहीणं। मूलं संसारस्स उ हवंति निग्गंथरूवेणं ॥ ७८६ ॥

सप्ताप्येता दृष्टयो, बोटिकास्तु मिथ्यादृष्टय एवेति न तद्विचारः, 'जातिजरामरणगर्भवसतीना'मिति जातिग्रहणं नारकादिप्रकृतिग्रहे चरितार्थमिति गर्भवसतिग्रहणमदुष्ट, मूल–कारणं, भवतीति योग, मा भूत्सकृद्भाविनीना जातिजरामरणगर्भवसतीना मूलमिति प्रत्ययस्तत आह–'संसारस्स उ' इति ससरणं ससार –तिर्यङ्नरनारकामरभवानुभूतिरूप प्रदीर्घ तस्यैव, तुशब्दस्यावधारणार्थत्वात्, केन रूपेणेत्याह–निर्ग्रन्थरूपेण ॥ अथैते निन्हवा कि साधव उत तीर्थान्तरीया आहोस्विन्मिथ्यादृष्टयः?, उच्यते, न साधवो, यत साधूनामेकस्याप्यर्थाय यत्कृतमशनादि तच्छेपाणा न कल्पते, नैवं निन्हवाना, तथा चाह–

पवयणनीहूआणं जं तेसिं कारिअं जहिं जत्थ। भज्जं परिहरणाए मूले तह उत्तरगुणे अ ॥ ७८७ ॥

'निहृय'त्ति देशीवचनमकिञ्चित्करार्थे, तत' प्रवचने पारमेश्वरे यथोक्तक्रियाकलापं प्रत्यकिञ्चित्कराणा, अथवा 'निहूय'त्ति
आर्षत्वात् निन्हुत, तत्र प्रवचन निन्हुतम्–अपलपित यैस्ते प्रवचननिन्हुता , सुखादिदर्शनात् निष्ठातस्य पाक्षिक परनिपात ,
तेषा यद् अशनादि तेषामुपभोगो(गाय) यत् कारित यस्मिन् काले यत्र क्षेत्रे तस्राज्यं–विकल्पनीय परिहरणे, कदाचित्परि-
ह्रियते कदाचिन्नेति, यदि लोको न जानाति यथैते निन्हवाः साधुभ्यो भिन्नास्तदा परिह्रियते, अथ जानाति तदा न परि-
हार , अथवा परिहरणा नाम परिभोग , तथा चोक्तम्–"धारणया उवभोगो परिहरणा (होइ) तस्स परिभोगो" तत' कदा-
चित् परिभुज्यते कदाचिन्नेति, निन्हवत्वे परिज्ञाते भुज्यते, शेषकालं नेति, कथभूत तत् अशनादि तन्निमित्तं कारितमित्यत
आह–'मूले' मूलगुणविषयं आधाकर्म्मादि, तथोत्तरगुणविषयं च–क्रीतकृतादि, ततो नैते साधवो, नापि गृहस्था नाप्यन्य-
तीर्थ्या , यतस्तदर्थाय कृतमेकान्तेन कल्पमेव भवति, यत्र तु भजना ततोऽव्यक्ता इति ॥ आह–यद्बोटिकाना कारितं
मूले–मूलगुणविषयमुत्तरगुणे–उत्तरगुणविषयं तत्सर्वमपि, तत्र का वार्त्ता ?, उच्यते–

मिच्छादिट्ठीआणं ज तेसिं कारिअ जया जत्थ । सव्वंपि तयं सुद्धं मूले तह उत्तरगुणे अ ॥ ७८८ ॥

तेषा मिथ्यादृष्टीना बोटिकानामुपभोगाय यत्कारितमशनादि, गृहस्थै कारितं, 'मूले' मूलगुणविषयमुत्तरगुणे–उत्तर-
गुणविषय तत्सर्वमपि शुद्धं, कल्पनीयमिति भाव ॥ उक्त समवतारद्वारम्, अधुनाऽनुमतद्वारव्याख्यावसर , तत्र यत् यस्य
नयस्य सामायिकं मोक्षमार्गत्वेनानुमतं तदुपदर्शयन्नाह–

तवसजमो अणुमओ निग्गंथं पवयणं च ववहारो । [illegible]णाण पुण निव्वाण संजमो चेव ॥ ७८९ ॥

तापयत्यष्टप्रकार कर्म्मेति तप , तपतेरौणादिकोऽसूमत्यय , अनशनोनोदरतादि तत्प्रधान' सयमस्तप'सयम , असावनुमत.–अभीष्टो मोक्षागतया, तथा निर्ग्रन्थानामिद नैर्ग्रन्थं, आर्हतमित्यर्थ , कि ?, प्रवचन–श्रुत, इह तपोग्रहणेन द्वादशप्रकारमपि तप परिगृह्यते, सयमो नाम पापोपरम , स च सप्तदशप्रकार., एतेन च चारित्रसामायिकं परिगृहीत, नैर्ग्रन्थं प्रवचन–श्रुत, चशब्दः सम्यक्त्वादिसामायिकसमुच्चयार्थ., 'ववहारो'त्ति एव व्यवहारो व्यवस्थित',व्यवहारग्रहणात् तदधोवर्त्तिनौ नैगमसंग्रहावपि गृहीतौ, तत एतदुक्तं भवति–नैगमसङ्ग्रहव्यवहारास्त्रिविधमपि सामायिकं मोक्षमार्गतयाऽनुमन्यन्ते इति। आह च भाष्यकृत्–कस्स नयस्साणुमय कि सामइयमिह मोक्खमग्गोत्ति ?। भण्णइ नेगमसगह-ववहाराणं तु सव्वाइ ॥१॥ तवसजमा चरित्त निग्गंथ पवयणंति सुयनाणं। तग्गहणे सम्मत्त तग्गहणातो य नायव्वं ॥२॥ ( विशे २६२२-३ ) आह–यदि नैगमादयस्त्रिविधमपि सामायिक मोक्षमार्गतयाऽनुमन्यन्ते किमिति तर्हि ते मिथ्यादृष्टय' ?, उच्यते, व्यस्तानामेव तेषा तै॰ मोक्षमार्गतयाऽनुमाननात्, न सापेक्षाणामेवेति, शब्दऋजुसूत्रयो' पुनः कारणे कार्योपचारात् निर्वाणमार्गो निर्वाण सयम एवेत्यनुमतं, इह ऋजुसूत्रमुल्लङ्घयादौ शब्दनयोपन्यासोऽशेपोपरितननयपरिग्रहार्थ', तत एतदुक्त भवति–ऋजुसूत्रादयः सर्वे चारित्रमेवैकं मोक्षमार्गमनुमन्यन्ते, न ज्ञानदर्शने, तद्भावेऽपि मोक्षासम्भवात्, तथाहि–न सर्वज्ञानसर्वदर्शनलाभेऽपि तत्कालमेवापवर्गप्राप्ति , किन्तु सर्वसवरलाभे, ततः स एवैको मोक्षमार्ग इति, उक्तं च–"उज्जुसुयाइमयं पुण निव्वाणपहो चरित्तमेवेग। न उ नाणदंसणाइं भावेवि न तेसि जं मोक्खो ॥ १॥ जं सव्वनाणदंसणलंभेवि न तक्खणं चिय विमोक्खो। मोक्खो य सव्वसवरलाभे मग्गो स एवातो॥ २॥" ( विशे २६२५-६ ) एवं ब्रुवाणान् ऋजुसूत्रप्रभृतीन्

प्रति नैगमादयो ब्रुवते—ननु ज्ञानदर्शनाभ्यामपि विना न प्रकर्षप्राप्त सर्वसंवरलाभ उपजायते, तत्सहितस्यैव तल्लाभाभ्युपगमात्, ततः कथं न त्रितयं मोक्षमार्गः ? इति, ऋजुसूत्रादयः प्राहुः, तदसम्यक्, वस्तुतत्त्वापरिज्ञानात्, तथाहि—यदि नाम न ज्ञानदर्शनाभ्यां विना यथोक्तसंवरलाभस्ततस्ते तस्य कारणं भवताम्, नतु मोक्षस्य सर्वसंवरसाध्यस्य, कथं ?, तद्भावे भाव एवेत्यन्वयानुगमाभावात्, इह यत् यस्यान्वयं व्यतिरेकं वा नानुविधत्ते न तस्य तत्कारणं, यथा कुशूलन्यस्तबीजमङ्कुरस्य, न भवति च मोक्षः सर्वज्ञानसर्वदर्शनसम्भवेऽपि तत्कालमेवेति, अथ सतोरेव सर्वज्ञानसर्वदर्शनयोः सर्वसंवरलाभो, न तदभावे, तेन ते अपि मोक्षकारणस्य सर्वसंवरस्य कारणत्वान्मोक्षकारणमिति, तदयुक्तं, परम्परयापि कारणत्वाभ्युपगमे सकलस्यापि भुवनस्य मोक्षकारणत्वप्रसक्तेः, भुवनोदरवर्त्तिनां सर्वेषामपि वस्तूनां ज्ञेयश्रद्धेयप्रवृत्तिनिवृत्तिविषयतया ज्ञानदर्शनचारित्रोपयोगित्वात्, तथा च सति ज्ञानादित्रिके एव को भवतामाग्रहः?, ततो यथा न समस्तं भुवनं मोक्ष(कारणं तद)कारणत्वादेवं ज्ञानदर्शने अपीति स्थितम्। तथा चाह भाष्यकृत्—आह ननु नाणदंसणरहियस्स न सव्वसंवरो दिट्ठो। तस्सहियस्सेव तओ तम्हा तिययंपि मोक्खपहो ॥१॥(वि २६२७)॥ जइ तेहिं विणा नत्थित्ति संवरो तेण ताइं तस्सेव। जुत्तं कारणमिह न उ संवरसज्झस्स मोक्खस्स ॥२॥(वि २६२८)॥ अह कारणोवगारित्ति कारणं तेण कारणं सव्वं। भुवणं नाणाईणं जइणो नेयाइभावेण ॥३॥(वि २६२९)॥ अह पच्चासन्नतरं नेयरमिहोवगारगारिंपि। तो सव्वसंवरमयं चारित्तं चेव मोक्खपहो ॥४॥(वि २६३०)॥ तदेवं यत् यस्य नयस्य सामायिकं मोक्षमार्गत्वेनानुमतं तदभिहितं, भगवतस्तु मतेन त्रीण्यपि ज्ञानादीनि सामायिकानि परस्परसापेक्षाणि मोक्षमार्गः, एकस्याप्यभावे मोक्षस्यासंभवात्, 'तस्मात्सर्वस्य

कार्यस्य, सामग्री जनिका मते'ति वचनात्, उक्तमनुमतद्वार, तद्भणने च व्याख्याता 'उद्देसे निद्देसे य' इत्यादिका उपोद्घातनिर्युक्तिगता प्रथमद्वारगाथा ॥ सम्प्रति द्वितीयद्वारगाथाप्रथमावयव किमिति द्वार व्याख्यायते–तत्र सामायिक नाम किं जीवः ? उताजीव' ? अथोभयम् ? आहोस्विदनुभय ?, जीवत्वेऽपि कि द्रव्यमुत गुण ? इत्याशङ्कापनोदार्थमाह–

आया खलु सामइअ पच्चक्खायंतओ हवइ आया । तं खलु पच्चक्खाणं आवाए सव्वद्व्वाणं ॥ ७९० ॥

आत्मा–जीव , खलुशब्दोऽवधारणे, आत्मैव–जीव एव सामायिकम् , एतेन प्रागुपन्यस्तशेषाजीवादिविकल्पव्युदास•, स च न सामान्येन, किन्तु प्रत्याचक्षाण'–प्रत्याख्यान कुर्वन्, प्रत्याख्यानपरिणामे वर्त्तमान इति भावः, 'हवइ आया' इति स एव च प्रत्याचक्षाणः परमार्थतो भवत्यात्मा, श्रद्धानज्ञानसावद्यविनिवृत्तिरूपस्वभावावस्थितत्वात्, शेषः ससारी पुनरात्मैव न भवति, प्रचुरघातिकर्म्मपरमाणुभिस्तस्य स्वाभाविकगुणतिरस्करणात्, अत एव यथोक्तात्मप्रतिपत्त्यर्थं द्वितीयात्मग्रहण, 'तं खलु पच्चक्खाणं'ति खलुशब्द' सामायिकस्य जीवपरिणतिरूपत्वज्ञापनार्थः, तत् खलु प्रत्याख्यानं जीवपरिणतिरूप विषयमधिकृत्य सर्वद्रव्याणामापाते–आभिमुख्येन सन्निपतने, निष्पद्यते इति वाक्यशेष', सर्वद्रव्याणा श्रद्धेयतया ( ज्ञेयतया ) यथायोग प्रवृत्तिनिवृत्तिविषयतया च तद्विषयत्वात्, ननु कि सामायिकमिति स्वरूपप्रश्ने प्रक्रान्ते विषयनिरूपणमस्यान्याय्यम्, अप्रस्तुतत्वात्, बाह्यशास्त्रवत्, उच्यते, अप्रस्तुतत्वादित्यसिद्धं, तथाहि–सामायिकविषयनिरूपण प्रस्तुतं सामायिकाङ्गत्वात्, यत् यत्सामायिकाङ्गं तत्प्ररूपणं प्रस्तुत, यथा सामायिकस्वात्मप्ररूपणमित्यल विस्तरेण ॥ तत्र यदुक्तम् 'आत्मा खलु सामायिक'मिति तत्र यथाभूतोऽसौ सामायिक तथाभूतमभिधित्सुराह—

सावज्जजोगविरओ, तिगुत्तो छसु संजओ। उवउत्तो जयमाणो, आया सामाइअं होइ ॥ १४९॥ (मू. भा.)

अवद्य–मिथ्यात्वकषायनोकषायलक्षण, सह अवद्य यस्य येन वा स सावद्य स चासौ योगश्च सावद्ययोग तस्मात् विरतो निवृत्त सर्वसावद्ययोगविरत, तथा त्रिभिः–मनोवाक्कायैर्गुप्त, तथा षट्सु जीवनिकायेषु सयतः–प्रयत्नवान्, अवश्यकर्त्तव्येषु योगेषु सततमुपयुक्तो, यतमान, यतनं–तेषामासेवन, इत्थभूत आत्मा सामायिकमिति, इय मूलटीकानुसारेण व्याख्या ॥ साम्प्रतमियमेव गाथा कथं कालिकसूत्रेऽपि प्रतिसूत्रं पूर्वमवतेरुर्नया इति सकौतुकविनेयजनानुग्रहाय पूर्वसूरिकृतव्याख्यानुसारेण नयैर्व्याख्यायते, सङ्ग्रहनय प्राह–आत्मा सामायिकं–सामायिकशब्दवाच्यो, न तदतिरिक्त गुणान्तर, गुणाना द्रव्यात् पृथग्भूतानामसम्भवाद्, अपृथग्भूताना द्रव्ये एवान्तर्भावात्, एवं ब्रुवाणं सङ्ग्रहं प्रति व्यवहारोऽवोचत्–न शक्यमेतत् प्रतिपत्तुमतिप्रसङ्गदोषात्, तथाहि–यद्यात्मा सामायिकं ततो यो य आत्मा स सामायिकमिति प्रसक्त, तत एव प्ररूपय 'जयमाणो आया सामाइय होइ' इति, यतमानो नाम प्रयत्नपर, तथाभूत आत्मा सामायिक, न शेष इति, एवं व्यवहारेणोक्ते सति ऋजुसूत्रनय उवाच–यदि नाम यतमान आत्मा सामायिक तत एव तामलिप्रभृतयोऽपि स्वच्छदसा यतमानाः सामायिक प्रसक्ताः, तेषामपि स्वसमयागतयतनामात्रसम्भवात्, न चैतदिष्ट, तेषा मिथ्यादृष्टित्वात्, तत एवमवबुध्यस्व–उपयुक्तो यतमान आत्मा सामायिकमिति, उपयुक्तो नाम ज्ञेयप्रत्याख्येयज्ञानप्रत्याख्यानपरिणाम, एवं सति तामलिप्रभृतीना व्यवच्छेद, तेषा सम्यग्ज्ञानसम्यक्प्रत्याख्यानासम्भवात्, एवमृजुसूत्रेणोक्ते शब्दनयोऽभाणीत्–यद्युपयुक्तो यतमान आत्मा सामायिकम्, एव तर्ह्यविरतसम्यग्दृष्टयो देशविरताश्च सामायिक

एवमाचक्ष्व-षट्सु सयत उपयुक्तो यतमान
प्राप्नुवन्ति, तेषामपि यथायोग ज्ञेयज्ञानप्रत्याख्येयप्रत्याख्यानसम्भवात्, तत
आत्मा सामायिकमिति, षट्सु-पृथिवीकायिकादिषु सम्यक्-सूत्रोक्तनीत्या यत -सङ्घट्टनपरितापनादिभ्यो विरत. सयत.,
एवं चाविरतसम्यग्दृष्टिदेशविरतव्यवच्छेद , तेषा त्रिविधत्रिविधेन षड्जीवनिकायपरितापनादिभ्यो विरत्यभावात्, एव-
मुक्ते समभिरूढ· प्राह-यदि षट्सु जीवनिकायेषु सयत उपयुक्तो यतमान आत्मा सामायिक ततः प्रमत्तसयतानामपि
सामायिकत्वप्रसग·, तेषामपि षट्सु सयतत्वात्, तत एवमवगच्छ-त्रिगुप्त षट्सु संयत उपयुक्तो यतमान आत्मा सामा-
यिकमिति, त्रिगुप्तो नाम मनोवाक्कायगुप्त , किमुक्त भवति ?-अकुशलमनोवाक्कायप्रवृत्तिनिरोधी कुशलमनोवाक्कायो-
दीपकः, एकग्रहणे तज्जातीयग्रहणमिति न्यायात् पञ्चसु ईर्याभाषैषणाऽऽदानभाण्डमात्रनिक्षेपणोच्चारप्रश्रवणादिपरिष्ठापनरू-
पासु समितिषु समित इत्यपि गृह्यते, ततः प्रमत्तसयताना व्यवच्छेदः, तेषा निद्राविकथादिप्रमादोपेताना यथोक्तरूपगु-
प्तिसमित्यभावात्, एव समभिरूढेनाभिहिते एवंभूतो वदति-यदि नाम यथोक्तस्वरूप आत्मा सामायिकं ततोऽप्रमत्त-
सयतादयोऽपि सामायिक भवेयुः, तेषामपि यथोक्तविशेषणविशिष्टत्वभावात्, तत एवं प्रतिपद्यस्व-सावद्ययोगविरत-
स्त्रिगुप्त षट्सु सयत· उपयुक्तो यतमान आत्मा सामायिकमिति, सावद्ययोगविरतो नाम अवद्य-कर्म्मबन्ध , सहावद्य
यस्य येन वा स सावद्य , योगो व्यापार सामर्थ्य वीर्यमित्येकार्थ, "जोगो विरियं थामो उच्छाह परक्कमो तहा चेट्ठा ।
सत्ती सामत्थं चिय जोगस्स हवति पज्जाया ॥ १ ॥" इति वचनात्, सावद्यश्चासौ योगश्च सावद्ययोगस्तस्मात् विरत·-
प्रतिनिवृत्तः सावद्ययोगविरतो, ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च परिज्ञातसमस्तसावद्ययोग·, किमुक्तं भवति ?-निरुद्ध-

सूक्ष्मबादरमनोवाक्कायव्यापारो विगतक्रियानिवर्त्तिध्यानमधिरूढ शैलेशीं प्रतिपन्नो नामात्मा सामायिकमिति, एव चा-
प्रमत्तसयतादीना व्यवच्छेद , तेषा मनोवाक्कायव्यापारवत्तया सावद्ययोगपरिकलितत्वात्, 'नत्थि हु सकिरियाण अबधग
किंचि इह अणुट्ठाण'मिति वचनात्, नैगमस्य त्वनेकगमत्वात् समस्तैतद्विशेषणविशिष्टो वा द्वित्रिचतु पञ्चविशेषणविशिष्टो
वा सामायिकमिति ॥ अन्ये त्वेवमभिदधति-सङ्ग्रहो वक्ति-आत्मा सामायिक-सामायिकशब्दवाच्यः, भावना प्रागिव, एव-
मुक्ते व्यवहारस्त प्रति भाषते-यदि नामात्मा सामायिकमित्येतावन्मात्रमभ्युपगम्यते तत. सावद्यव्यापारबहुलानामपि सामा-
यिकत्वप्रसङ्ग , ततो मा वादीरेव, किन्त्वेवं वद-सावद्ययोगविरत आत्मा सामायिकमिति, एव च सावद्यव्यापारनिषण्णाना
सामायिकत्वव्युदास , ऋजुसूत्र पुन' संयममेव सामायिकं मन्यते, न सम्यक्त्वसामायिक श्रुतसामायिक वा, विरत्यभावे
तयोर्निष्फलत्वात्, 'ज्ञानस्य फल विरति'रिति वचनात्, विरतिभावे च तयोः तत्रैवान्तर्भावात्, तत उक्तप्रकारेण वदन्त
व्यवहार प्रति स प्राह-विरतिर्नाम परिज्ञानमात्रेऽपि तदासक्त्यभावतो लोके व्यवह्रियते, तथाहि-केचित्प्रबलचारित्रावर-
णीयकर्मोदयसमेताः कदाचित्तीर्थकरादिसमीपे धर्म्मश्रवणवेलाया नरकादिदु खाकर्णनतस्तद्भीता विषयान् नरकादिकुग-
तिप्रपातहेतूनवबुध्य तेभ्यो विरज्यन्ते-हा धिग् ! वयमेतेष्वेवरूपेष्वपि प्रसक्ता इति, लोकानामपि च तथारूपचेष्टादिद-
र्शनत एव प्रत्यय उपजायते-यदेते विरक्ता इति, पर ते न तान् विषयान् त्यक्तु शक्नुवन्ति, प्रबलचारित्रावरणीयकर्मो-
दयात्, तत सावद्ययोगविरत आत्मा सामायिकमित्येतावन्मात्रोक्तौ तेषामपि सम्यक्त्वसामायिकवत्ता च व्यवहारत
सावद्ययोगविरताना सामायिकत्वं प्राप्नोति, तस्मादेवमभिधानीय-सावद्ययोगविरतस्त्रिगुप्त आत्मा सामायिकमिति, त्रिगुप्त

इत्यस्य व्याख्यान प्राग्वत्, त्रिगुप्त इत्युपलक्षण, तेन पञ्चसमित इत्यपि द्रष्टव्य, शब्दनयः पुनर्देशविरतिसामायिकमपि नेच्छति, तत एवमभिदधानमृजुसूत्रं प्रति स ब्रूते—यदि नाम सावद्ययोगविरतस्त्रिगुप्त सामायिकमित्युच्यते ततो देश-विरता अपि सामायिक प्राप्नुवन्ति, तेपामपि सामायिकं कुर्वता सावद्ययोगविरतत्वात् यथायोग पञ्चसमितित्रिगुप्ति-भावाच्च, ततस्तेपा सामायिकत्वप्रतिपेधार्थमेवमभिदध्या —सावद्ययोगविरतस्त्रिगुप्तः पट्सु सयतः आत्मा सामायिकमिति, पट्सु संयतो नाम त्रिविधंत्रिविधेन पट्सु जीवनिकायेषु सङ्घट्टनपरितापनादिभ्यो विरत , तत एव देशविरताना सामा-यिकमपि कुर्वता सामायिकत्वव्युदास , त्रिविधत्रिविधेन विरत्यभावाद्, द्विविधंत्रिविधेनेति सामायिकसूत्रोच्चारणात्, समभिरूढ॰ पुन॰ प्रमत्तसयतानामपि सूक्ष्मसम्परायपर्यन्ताना सामायिकत्व नेच्छति, तत उक्तप्रकारेण ब्रुवन्तं शब्दनयं प्रति स प्राह—यदि नाम सावद्ययोगविरतस्त्रिगुप्त॰ पट्सु सयत आत्मा सामायिकमिति ब्रूपे, तत॰ प्रमत्तसंयतादीनामपि सामायिकत्वप्रसङ्ग , तेपामपि यथोक्तविशेपणाविशिष्टत्वात्, तस्मादेवं वद—सावद्ययोगविरतस्त्रिगुप्त पट्सु सयत उपयुक्त आत्मा सामायिकमिति, उपयुक्तो नाम कपायोदयलेशेनाप्यकलङ्कितः सन् समभावव्यापृत॰, ते च उपशान्तमोहादय एव, न प्रमत्तसयतादय॰, ततस्तेपा व्युदास , एवंभूत॰ पुनः समुद्घातादिगतं सयोगिकेवलिनमयोगिकेवलिनं वा सामायिक-मिच्छति, न शेपं, यत॰ सामायिकस्य फल मोक्ष , ततो यैव सम्यक् समभावे व्यवस्थितस्य समस्तकर्म्मविमोक्षार्थ-मायोजिकाकरणसमुद्घातादिका विगतक्रियाऽनिवर्त्तिध्यानप्रतिपत्तिरूपा वा क्रिया सैव सामायिकशब्दस्य प्रवृत्तिनिमि-त्तम्, अतस्तत्प्रतिपत्त्यर्थ विशेपणान्तरमाह—सावद्ययोगविरतस्त्रिगुप्त॰ पट्सु संयत उपयुक्तो यतमान आत्मा सामायिक-

मिति, एत्र चोपशान्तमोहादीना सामायिकत्वप्रतिक्षेप', तेषा यथोक्तलक्षणक्रियारूपाया यतनाया असम्भवात्, नैगमस्त्वनेकगमत्वादेव प्राग्वत् सामायिकमिच्छन् भावनीय ॥ सम्प्रति यदुक्त–'त खलु पच्चक्खाण आवाए सव्वदव्वाणं'ति, तत्र साक्षान्महाव्रतरूप चारित्रसामायिकमधिकृत्य सर्वद्रव्यविषयतामुपदर्शयति–

**पढमम्मि सव्वजीवा बीए चरिमे अ सव्वदव्वाइं। सेसा महव्वया खलु तदिक्कदेसेण दव्वाणं ॥ ७९१ ॥**

तत्र साक्षान्महाव्रते विषयद्वारेण चिन्त्यमाने (प्रथमे–प्राणातिपातविरमणरूपे आद्ये महाव्रते) सर्वजीवा'–त्रसस्थावरसूक्ष्मेतरभेदा विषयत्वेन द्रष्टव्या, तस्य तदनुपालनरूपत्वात्, द्वितीये मृषावादविनिवृत्तिरूपे चरमे च—परिग्रहविनिवृत्तिलक्षणे सर्वद्रव्याणि विषयत्वेनावगन्तव्यानि, कथमिति चेत्, नास्ति पञ्चास्तिकायात्मको लोक इति हि मृषावादः सर्वद्रव्यविषय, तन्निवृत्तिरूप च द्वितीय महाव्रत, तथा परिग्रहोऽपि मूर्च्छाद्वारेण समस्तद्रव्यगोचर, तन्निवृत्तिरूप च पञ्चम महाव्रतम्, अतो द्वे अप्यशेषद्रव्यविषये, 'सेसा' इत्यादि, खलुशब्दोऽवधारणे, तस्य च व्यवहितः सम्बन्ध, शेषाणि महाव्रतानि द्रव्याणा विषये तदेकदेशेनैव, भवन्तीति क्रियाध्याहार', तेषा द्रव्याणामेकदेशस्तेनैव हेतुभूतेन भवन्ति, नतु समस्तद्रव्यविषयाणि, कथ?, तृतीयस्य ग्रहणधारणीयद्रव्यादत्तादानविरतिरूपत्वात् चतुर्थस्य 'रूवेसु वा रूवसहगएसु वा दव्वेसु' इत्यादिवचनतो रूपरूपसहगतद्रव्यसम्बन्ध्यब्रह्मविरतिरूपत्वात् षष्ठस्य च रात्रिभोजनविरमणरूपत्वादिति, एवं तावच्चारित्रसामायिक निवृत्तिद्वारेण सर्वद्रव्यविषय, श्रुतसामायिकमपि श्रुतज्ञानात्मकत्वात् सर्वद्रव्यविषयमेव, सम्यक्त्वसामायिकमपि सर्वद्रव्याणा सगुणपर्यायाणा विषये श्रद्धानं, तद्रूपत्वात् सर्वविषयमित्यल प्रसङ्गेन, प्रकृत प्रस्तुम ॥ तत्र सामायिकमजीवादिव्युदासेन जीव एवेत्युक्त, जीवश्च

द्रव्यगुणसमुदायात्मक इति द्रव्यगुणयोः सामायिकमिति द्रष्टव्यम्, अत्र नयैश्चिन्ता, यतः केचिन्नया द्रव्यं सामायिकमिति प्रतिपन्ना, अपरे गुण इति, सकलनयाना च आधारभूतौ द्वौ नयौ, तद्यथा–द्रव्यार्थिकः पर्यायार्थिकश्च, तत्र नैगमसङ्ग्रहव्यवहारा द्रव्यार्थिकनयाः, उपरितना ऋजुसूत्रप्रभृतयश्चत्वारः पर्यायार्थिकनयाः, आह च चूर्णिकृत्–"आइतिग नयाण दव्वट्ठिओ, उवरिल्ला चत्तारि पज्जवट्ठितो" इति, तत्र द्रव्यार्थिक पर्यायार्थिको वा यत् सामायिकमिच्छति तदुपदर्शयन्नाह—

जीवो गुणपडिवन्नो नयस्स दव्वट्ठियस्स सामइयं। सो चेव पज्जवट्ठियनयस्स जीवस्स एस गुणो ॥ ७९२ ॥

जीव –आत्मा गुणैः–सम्यक्त्वादिभि प्रतिपन्नः–आश्रितो गुणप्रतिपन्न द्रव्यमेवार्थो यस्य न पर्यायाः स द्रव्यार्थिकः, अथवा 'दव्वट्ठिय' इति द्रव्यस्थित इति संस्कार, द्रव्ये वस्तुतत्त्वबुद्ध्या स्थितो न तु पर्याये इति द्रव्यस्थित, यदिवा द्रव्यास्तिक इति संस्कार, तत्र अस्तीति मतिरस्येत्यास्तिकः, 'दैष्टिकास्तिकनास्तिका' इति निपातनादिकण् इत्यास्तिको, नतु पर्याये इति द्रव्यास्तिक, किमुक्तं भवति?–द्रव्यमेव तात्त्विकमस्ति न पर्याया इति य. प्रतिपन्नः स द्रव्यास्तिक इति, तस्य द्रव्यार्थिकस्य द्रव्यस्थितस्य द्रव्यास्तिकस्य वा नयस्य मतेन सामायिकं, इयमत्र भावना–गुणाः खल्वौपचारिकत्वादसन्त एव, परमार्थतो द्रव्यव्यतिरेकेण तेपामनुपलम्भात्, अथ यदि रूपादयो न सन्ति कथं तर्हि लोकस्य द्रव्ये तत्प्रतिपत्ति, चित्रे निम्नोन्नतभेदप्रतिपत्तिवत्, गुणप्रतिपन्न इत्यत्रापि गुणस्य विशेषणीभावेन जीवस्यैव तात्त्विकत्वं, यथा पावक इत्यत्र पुरुपस्य पचनक्रियाया, ततोऽस्य द्रव्यार्थिकनयस्य न्यग्भूतगुणग्रामो जीव एव सामायिकं, न पर्याय इति। पर्यायार्थिकस्य पर्यायस्थितस्य पर्यायास्तिकस्य वा पुनर्नयस्य स एव सामायिकादिर्गुणः परमार्थतो, नतु जीवद्रव्यं, गुणातिरेकेण

मिति, एव चोपशान्तमोहादीना सामायिकत्वप्रतिक्षेप, तेषा यथोक्तलक्षणक्रियारूपाया यतनाया असम्भवात्, नैगमस्त्वनेकगमत्वादेव प्राग्वत् सामायिकमिच्छन् भावनीय ॥ सम्प्रति यदुक्त-'त खलु पच्चक्खाणं आनाए सवदवाणं'ति, तत्र साक्षान्महाव्रतरूपं चारित्रसामायिकमधिकृत्य सर्वद्रव्यविषयतामुपदर्शयति-

पढमम्मि सव्वजीवा बीए चरिमे अ सव्वदवाइं । सेसा महव्वया खलु तदिक्कदेसेण दव्वाणं ॥ ७९१ ॥

तत्र साक्षान्महाव्रते विषयद्वारेण चिन्त्यमाने (प्रथमे-प्राणातिपातविरमणरूपे आद्ये महाव्रते) सर्वजीवा -त्रसस्थावरसूक्ष्मेतरभेदा विषयत्वेन द्रष्टव्या, तस्य तदनुपालनरूपत्वात्, द्वितीये मृषावादविनिवृत्तिरूपे चरमे च—परिग्रहविनिवृत्तिलक्षणे सर्वद्रव्याणि विषयत्वेनावगन्तव्यानि, कथमिति चेत्, नास्ति पञ्चास्तिकायात्मको लोक इति हि मृषावादः सर्वद्रव्यविषय, तन्निवृत्तिरूप च द्वितीय महाव्रत, तथा परिग्रहोऽपि मूर्च्छाद्वारेण समस्तद्रव्यगोचरः, तन्निवृत्तिरूप च पञ्चमं महाव्रतम्, अतो द्वे अप्यशेषद्रव्यविषये, 'सेसा' इत्यादि, खलुशब्दोऽवधारणे, तस्य च व्यवहितः सम्बन्ध, शेषाणि महाव्रतानि द्रव्याणा विषये तदेकदेशेनैव,भवन्तीति क्रियाध्याहार',तेषां द्रव्याणामेकदेशस्तेनैव हेतुभूतेन भवन्ति, नतु समस्तद्रव्यविषयाणि,कथं?, तृतीयस्य ग्रहणधारणीयद्रव्यादत्तादानविरतिरूपत्वात् चतुर्थस्य 'रूवेसु वा रूवसहगएसु वा दवेसु' इत्यादिवचनतो रूपरूपसहगतद्रव्यसम्बन्ध्यब्रह्मविरति रूपत्वात् षष्ठस्य च रात्रिभोजनविरमणरूपत्वादिति, एवं तावच्चारित्रसामायिक निवृत्तिद्वारेण सर्वद्रव्यविषय, श्रुतसामायिकमपि श्रुतज्ञानात्मकत्वात् सर्वद्रव्यविषयमेव, सम्यक्त्वसामायिकमपि सर्वद्रव्याणा सगुणपर्यायाणा विषये श्रद्धानं, तद्रूपत्वात् सर्वविषयमित्यल प्रसङ्गेन, प्रकृत प्रस्तुम ॥ तत्र सामायिकमजीवादिव्युदासेन जीव एवेत्युक्त, जीवश्च

भिमतं द्रव्यं, कारणकार्यरूपविकलत्वात्, खरविषाणवत्, अस्तित्वं हि नामार्थक्रियाकारित्वं, 'यदेवार्थक्रियाकारि तदेव परमार्थस'दिति वचनात्, सर्वा अर्थक्रियाकारिता कारणकार्यरूपत्वेन व्याप्ता, द्रव्यस्य कारणकार्यरूपविकलस्यार्थक्रियाया अदर्शनात्, किं हि तदस्ति वस्तु यदकारणरूपमकार्यरूपं वा सत् अर्थक्रिया कुर्यात् ?, ततः कारणकार्यरूपत्वं व्यावर्त्त-मानं स्वव्याप्यमप्यस्तित्वं निवर्त्तयतीति व्यापकानुपलब्धिरेषा, तस्माद् गुण एव समभावलक्षणं सामायिकमिति । एवं पर्यायार्थिकेन स्वमते प्रतिपादिते द्रव्यार्थिक आह–

जं जं जे जे भावे परिणमइ पओग–वीससा दव्वं । तं तह जाणेइ जिणो अपज्जवे जाणणा नत्थि ॥ ७९४ ॥

यत् यत् आत्ममृदादिकं वस्तु यान् यान् भावान्–पर्यायान् विज्ञानघटादीन् परिणमति–तदात्वेन प्रतिपद्यते प्रयोगतो विस्रसातो वा, तत्र प्रयोगश्चेतनावतो व्यापारः, विस्रसा स्वभावः, तत्सर्वमुत्प्रेक्षितपर्यायं द्रव्यमेव, उत्फणविफणत्व-कुंडलिकादिपर्यायसमन्वितसर्प्पद्रव्यवत्, तथाहि–न तत्र केचन उत्फणतादयः सर्प्पद्रव्यातिरिक्ताः पर्यायाः सन्ति, प्रमाणेनानुपलब्धेः, गगनकुसुमस्य मुकुलितार्द्धमुकुलितत्वादिपर्यायवत्, तस्मात्तदेव द्रव्यं, तत्र (त्त्र) परमार्थसदिति । किञ्च-तत् द्रव्यं तथैव–अन्वयपर्यायोपसर्जनं जानाति–परिच्छिनत्ति जिनो–भगवान् केवली, कस्मात् पर्यायोपसर्जनं जानाति, नतु पर्यायरहितमित्यत आह–'अपज्जवे जाणणा नत्थित्ति' अपर्याये–पर्यायरहिते यतो जाणणा–परिज्ञा केवल्यादीनामपि नास्ति, ततस्ते उत्प्रेक्षामात्रेण व्यवह्रियन्ते, नतु परमार्थतः सन्ति, ततो द्रव्यमेव तात्त्विकमिति जीव एव सामायिकमिति गाथार्थः। अथवा 'दव्वप्पभवा य गुणा' इत्यादि द्रव्यार्थिकनयमतेन व्याख्यायते, उत्पद्यन्ते व्ययन्ते परिणमन्ति च यस्मात्

तस्यानुपलम्भात्, तथाहि—नास्ति गुणातिरिक्तो जीवः, प्रमाणेनानुपलब्धेः, रूपाद्यर्थान्तरभूतघटवत्, यदप्युक्तं प्राक् 'आत्मा खलु सामायिक'मिति तदपि यदेतत् ज्ञानादित्रिकरूप सामायिक स एव जीवस्य गुण इतिकृत्वा उपचारतोऽभिहित, यथा शुक्ल' पट पीता हरिद्रा कृष्णो भ्रमर इति, तत्त्वतस्तु स एव गुणः सामायिकमिति ॥ सम्प्रति पर्यायार्थिक एव स्व पक्ष समर्थयमान आह—

उप्पज्जति वयंति य परिणामंति अ गुणा न दव्वाइं। दव्वप्पभवा य गुणा, न गुणप्पभवाइं दव्वाइं ॥ ७९३ ॥

उत्पद्यन्ते—उत्पत्तिमासादयन्ति व्ययन्ते—विनाशमुपगच्छन्ति, चशब्द' समुच्चये, तथा परिणमन्ति—सङ्ख्यातीतानि तारतम्यानि अनुभवन्ति प्रतिक्षणम्, अन्यथाऽन्यथा प्रायस्तरतमभावात्, चशब्द एवकारार्थ, स चावधारणे, तस्य चैवं प्रयोगो—गुण एव, न द्रव्याणि, तेषामाकालमेकरूपत्वेनावस्थानाभ्युपगमात्, उक्तं च—"जीवे दव्वट्ठयाए सासए पज्जवट्ठयाए असासए" इति, ततस्त एव गुणास्तत्त्वत' सन्ति, उत्पादव्ययपरिणामोपेतत्वात्, पत्रगतनीलतारक्तादिवत्, तदतिरिक्तस्तु गुणी नास्त्येव, उत्पादव्ययपरिणामरहितत्वात्, गगनेन्दीवरवत्, उक्तं च—"उप्पायविगमपरिणामतो गुणा पत्तनीलयाइव। संति न उ दव्वमिट्ठ तविरहातो खपुप्फंव ॥ १ ॥" ( विशे २६४९ ) किंच—'दव्वप्पभवा य गुणा' द्रव्यात्प्रभव —उत्पादो येषा ते द्रव्यप्रभवा', चशब्दो युक्त्यन्तरसमुच्चये, गुणा न भवन्ति, किन्तु परस्परप्रत्ययभावप्रभवा, 'न गुणप्पभवाइं दव्वाइं' इति अत्रापि नेति सम्बध्यते, नापि गुणप्रभवानि द्रव्याणि, तेषा नित्यत्वेनाभ्युपगमात्, ततो न द्रव्याणा कारणत्व नापि कार्यत्वमिति तदभाव, सतो नियमेन कारणरूपतया कार्यरूपतया वा सम्भवात्, तथा च नास्ति परा-

सम्यक्त्वसामायिकं द्विविधं, तद्यथा–निसर्गसम्यक्त्वसामायिकमधिगमसम्यक्त्वसामायिक च, तत्र निसर्ग स्वभाव, तेन सम्यक्त्वसामायिकं निसर्गसम्यक्त्वसामायिकं, यदुपदेशमन्तरेणापि जीवस्य तथास्वभावत एवोपजायते तन्निसर्गसम्यक्त्वसामायिकमिति भाव', परोपदेशतो जीवादिपदार्थाधिगमपुरस्सरमुपजायते तदधिगमसम्यक्त्वसामायिकं, अथवा दशविधम्' एकैकस्य औपशमिकसास्वादनक्षायोपशमिकवेदकक्षायिकभेदात्, तत्र औपशमिकमुपशमश्रेणौ प्रथमसम्यक्त्वलाभे वा अन्तरकरणव्यवस्थितस्य, सास्वादनमौपशमिकसम्यक्त्वाद्धाया व्यवस्थितस्य मिथ्यात्वं गन्तुमनसो मिथ्यात्वमप्राप्तस्य, क्षायोपशमिक सम्यक्त्वपुद्गलान् वेदयमानस्य, वेदकं दर्शनत्रिकं क्षपयतश्चरमग्राससम्यक्त्वाणुवेदनस्वभावं, क्षायिकं दर्शनत्रिकक्षयनिष्पन्नं शुद्धात्मस्वभावरुचिरूपं, अथवा त्रिविधं–क्षायिकमौपशमिकं क्षायिकं च, सास्वादनस्यौपशमिके वेदकस्य च क्षायोपशमिके अन्तर्भावविवक्षणात्, यद्दिवा त्रिविधमेवं–कारकं रोचकं दीपकं च, तत्र यस्मिन् सम्यक्त्वे सति सदनुष्ठानं श्रद्धत्ते सम्यक् करोति ( च, करोति ) सदनुष्ठानमिति कारकं, यत्तु सदनुष्ठानं रोचयत्येव केवलं न पुनः कारयति तत् रोचक, यत् स्वयं तत्त्वश्रद्धान ( हीन ) एव मिथ्यादृष्टिः परस्य धर्मकथादिभिस्तत्त्वश्रद्धानं दीपयति–उत्पादयति तस्य परिणामविशेषः कारणे कार्योपचारात् सम्यक्त्व दीपकमुच्यते, उक्तं च–"सयमिह मिच्छद्दिट्ठी धम्मकहाईहिं दीवइ परस्स । सम्मत्तमिणं दीवग कारणकज्जोवयारातो ॥ १ ॥" श्रुतसामायिकं त्रिविधं, तद्यथा–सूत्रमर्थस्तदुभयं च, अक्षरानक्षरादिभेदादनेकविध वा, चारित्रसामायिकं त्रिविधं–क्षायिकमौपशमिक क्षायोपशमिकं च, तत्र क्षीणमोहादे' क्षायिकम्, उपशान्तमोहस्यौपशमिकं, प्रमत्तसंयतादीनां क्षायोपशमिकं, अथवा पञ्चविधं–सामायिक छेदोप-

गुणा एव, न द्रव्याणि, तस्मात्त एव तात्त्विका इति पर्यायार्थिकेनोक्ते द्रव्यार्थिक प्राह–द्रव्याण्येव च परमार्थत• सन्ति, न गुणा यतो द्रव्यप्रभवा गुणा , न गुणप्रभवानि द्रव्याणि, किमुक्त भवति ?–द्रव्यत्वेनोत्पादविगमपरिणामप्रकारैस्तेषा तेषा गुणानामुत्पादो भवति, तेषा परोपादानत्वात्, नतु गुणेपूक्तप्रकारेण द्रव्याणा, तेषामपरोपादानत्वात्, तस्मात् तान्येव द्रव्याण्यन्तर्विशेषणीभूतगुणानि तात्त्विकानि, न गुणा इत्यात्मैव सामायिकम्, एवं पर्यायार्थिकेन द्रव्यार्थिकेन च स्वमते उद्भाविते परस्परविरुद्धमताकर्णनतो व्याकुलीचित्त सन् शिष्य• प्रश्नयति–भगवन् ! किमत्र तत्त्वमिति ?, तत आचार्य स्वसिद्धान्तमुपदर्शयति–'जं जं जे जे भावे' गाथा, यत् यत् द्रव्यमात्ममृदादिक यान् यान् भावान्–पर्यायान् विज्ञानघटादीन् परिणमति–तादात्म्येन प्रतिपद्यते प्रयोगतो विश्रसातो वा 'त तहे'ति–अगृहीतवीप्सोऽपि प्राग्वीप्सोपन्यासादय शब्दो वीप्सा गमयति, तत् तत् तथा तथा परिणमन्तं जानाति जिनो–भगवान् केवली, यस्माद्-पर्याये–पर्यायरहिते 'जाणणा' केवलज्ञानेनापि परिज्ञा नास्ति, तस्मात् द्रव्यपर्यायात्मकं वस्तु तात्त्विक, केवलिना तथाऽवगतत्वात्, अत सामायिकभावपरिणत आत्मा सामायिकमिति स्थितं । व्याख्यातं किमिति द्वारं, अधुना कतिविधमिति द्वारं व्याचिख्यासुराह—

सामाइयं च तिविहं समत्त सुअ तहा चरित्त च । दुविहं चेव चरित्तं अगारमणगारिअ चेव ॥ ७९८ ॥

सामायिक प्राग्निरूपितशब्दार्थं, च पूरणे, त्रिविधं–त्रिभेद, तद्यथा–सम्यक्त्वम्, अत्रानुस्वारलोप आर्षत्वात्, श्रुतं चारित्रं, सम्यक्त्वसामायिकं श्रुतसामायिक चारित्रसामायिकमित्यर्थ , चशब्द स्वगतानेकभेदप्रदर्शनार्थ•, तत्र

सम्यक्त्वसामायिकं द्विविधं, तद्यथा–निसर्गसम्यक्त्वसामायिकमधिगमसम्यक्त्वसामायिक च, तत्र निसर्ग स्वभाव, तेन सम्यक्त्वसागायिकं निसर्गसम्यक्त्वसामायिकं, यदुपदेशमन्तरेणापि जीवस्य तथास्वभावत एवोपजायते तन्निसर्गसम्यक्त्वसामायिकमिति भाव', परोपदेशतो जीवादिपदार्थाधिगमपुरस्सरमुपजायते तदधिगमसम्यक्त्वसामायिकं, अथवा दशविधम्' एकैकस्य औपशमिकसास्वादनक्षायोपशमिकवेदकक्षायिकभेदात्, तत्र औपशमिकमुपशमश्रेणौ प्रथमसम्यक्त्वलाभे वा अन्तरकरणव्यवस्थितस्य, सास्वादनमौपशमिकसम्यक्त्वाद्धाया व्यवस्थितस्य मिथ्यात्वं गन्तुमनसो मिथ्यात्वमप्राप्तस्य, क्षायोपशमिकं सम्यक्त्वपुद्गलान् वेदयमानस्य, वेदकं दर्शनत्रिकं क्षपयतश्चरमग्राससम्यक्त्वाणुवेदनस्वभावं, क्षायिकं दर्शनत्रिकक्षयनिष्पन्नं शुद्धात्मस्वभावरुचिरूपं, अथवा त्रिविधं–क्षायिकमौपशमिकं क्षायिकं च, सास्वादनस्यौपशमिके वेदकस्य च क्षायोपशमिके अन्तर्भावविवक्षणात्, यद्विवा त्रिविधमेवं–कारकं रोचकं दीपकं च, तत्र यस्मिन् सम्यक्त्वे सति सदनुष्ठानं श्रद्धत्ते सम्यक् करोति (च, करोति) सदनुष्ठानमिति कारकं, यत्तु सदनुष्ठानं रोचयत्येव केवलं न पुनः कारयति तत् रोचकं, यत् स्वयं तत्त्वश्रद्धान (हीन) एव मिथ्यादृष्टिः परस्य धर्मकथादिभिस्तत्त्वश्रद्धानं दीपयति–उत्पादयति तस्य परिणामविशेषः कारणे कार्योपचारात् सम्यक्त्वं दीपकमुच्यते, उक्तं च–"सयमिह मिच्छदिट्ठी धम्मकहाईहिं दीवइ परस्स। सम्मत्तमिण दीवग कारणकज्जोवयारातो ॥ १ ॥" श्रुतसामायिकं त्रिविधं, तद्यथा–सूत्रमर्थस्तदुभयं च, अक्षरानक्षरादिभेदादनेकविध वा, चारित्रसामायिकं त्रिविधं–क्षायिकमौपशमिकं क्षायोपशमिकं च, तत्र क्षीणमोहादे क्षायिकम्, उपशान्तमोहस्यौपशमिकं, प्रमत्तसंयतादीनां क्षायोपशमिकं, अथवा पञ्चविधं–सामायिक छेदोप-

स्थाप्य परिहारविशुद्धिक सूक्ष्मसम्परायं यथाख्यात च, अथवा गृहीताशेपविकल्प द्विविधम्–अगारसामायिकमनगार-च, तथा चाह—'दुविह चेव चरित्त अगारमणगारिय चेव ॥ ७९६ ॥' सामायिक द्विविधमेव–द्विभेदमेव मूलभेदेन चारित्र–चारित्रसामायिकम्, अगाः–वृक्षास्तै कृतत्वाद् आ समन्तात् राजते इति अगारं–गृहं, 'क्वचिदि'ति ( ड ) प्रत्यय, तदस्यास्तीति 'अभ्रादिभ्य' इति मत्त्वर्थीयोऽकारप्रत्यय., अगारो–गृही तस्मिन् भवमागारिकम्, अध्यात्मादिभ्य इतीकण् प्रत्यय, इद चानेकभेद, देशविरतेश्चित्ररूपत्वात्, अनगारः–साधु, न विद्यते स्वस्वामिभावेनागारमस्येति व्युत्पत्ते, तस्मिन् भवमानगारिक चैव, पूर्ववदिकण्प्रत्ययः, आह–सम्यक्त्वसामायिकश्रुतसामायिके विहाय चारित्र-सामायिकस्य साक्षाद्भेदाभिधान किमर्थम् ?, उच्यते, तस्मिन् सति तयोर्नियमेन भाव इति ख्यापनार्थं, यद्वा चरम-त्वादस्य यथा भेद उक्त तथा शेषयोरपि वाच्य इति ज्ञापनार्थं ॥ साम्प्रतं मूलभाष्यकारः श्रुतसामायिकमध्ययनरूपत्वात् व्याचिख्यासुस्तस्य भेदानाह—

अज्झयणपि य तिविहं सुत्ते अत्थे (य) तदुभए चेव। सेसेसुवि अज्झयणेसु होइ एसेव निज्जुत्ती॥१५०॥ (भाष्यं)

अध्ययनमपि च त्रिविध–सूत्रविपयमर्थविषयं तदुभयविषय च, अपिशब्दात् सम्यक्त्वसामायिकमप्यौपशमिकादिभे-दात् त्रिविधमिति ॥ प्रक्रान्तोपोद्घातनिर्युक्तेरशेषाध्ययनव्यापितां दर्शयति–'शेषेष्वपि' चतुर्विंशतिस्तवादिष्वन्येष्वध्य-यनेषु भवत्येषैव–उद्देशनिर्देशादिका निरुक्तिपर्यवसाना निर्युक्ति. । आह–अशेषद्वारपरिसमाप्तावतिदेशो न्याय्य, किमर्थं

अपान्तरालेऽभिहित ?, उच्यते, मध्यग्रहणे आद्यन्तग्रहणं भवतीति न्यायप्रदर्शनार्थं, गतं कतिविधमिति द्वारम्, इदानीं कस्येति द्वारावसर, तत्र यस्य तद्भवति तदभिधित्सुराह—

जस्स सामाणिओ अप्पा, संजमे नियमे तवे। तस्स सामाइयं होइ, इइ केवलिभासिअं ॥ ७९६ ॥

यस्य साधोरात्मा-जीव, 'सामाणिओ'त्ति समानीतः-सकारस्य सूत्रे दीर्घ प्राकृतत्वात्, सम्यक् सन्निहितीकृत', क्व समानीत इत्याह-संयमे-मूलगुणेषु नियमे-उत्तरगुणेषु तपसि-द्वादशप्रकारेऽनशनादिलक्षणे, तस्यैवंभूतस्याप्रमादिन सामायिकं भवति, इतिशब्द परिसमाप्त्यर्थ, एतेषु त्रिषु संयमादिषु (समाहितस्य) स्ववीर्योल्लासविशेषेणेति गम्यते, सम्पूर्णं सामायिक भवतीति केवलिभिः-सर्वज्ञैर्भाषितम् ॥

जो समो सव्वभूएसुं, तसेसु थावरेसु य। तस्स सामाइअं होइ, इइ केवलिभासिअ ॥ ७९७ ॥

य समो-मध्यस्थ आत्मा, त(स्व)मिव पर पश्यतीति भाव॰, सर्वभूतेषु-सर्वेषु प्राणिषु, तद्यथा-त्रसेषु-द्वीन्द्रियादिषु स्थावरेषु-पृथिव्यादिषु तस्य सामायिक भवति, इति-एतावत् केवलिभिर्भाषितं ॥ सम्प्रति फलदर्शनद्वारेणास्य करणविधानं प्रतिपादयन्नाह-

सावज्जजोगप्परिवज्जणट्ठा, सामाइअं केवलिअं पसत्थं।

गिहत्थधम्मा परमंति नच्चा, कुज्जा बुहो आयहिअं परत्था ॥ ७९८ ॥

सावद्ययोगपरिवर्जनार्थं सामायिकं केवलिकमिति-पूर्णं प्रशस्तं-पवित्रम्, आत्मन॰ पवित्रीकरणात्, तथा गृहस्थधर्मात्

स्थाप्य परिहारविशुद्धिक सूक्ष्मसम्परायं यथाख्यात च, अथवा गृहीताशेपविकल्प द्विविधम्-अगारसामायिकमनगार-च, तथा चाह—'दुविह चेव चरित्त अगारमणगारिय चेव ॥ ७९६ ॥' सामायिकं द्विविधमेव-द्विभेदमेव मूलभेदेन चारित्र-चारित्रसामायिकम्, अगा -वृक्षास्तै कृतत्वाद् आ समन्तात् राजते इति अगार-गृहं, 'क्वचिदि'ति ( ड ) प्रत्यय, तदस्यास्तीति 'अभ्रादिभ्य' इति मत्त्वर्थीयोऽकारप्रत्ययः, अगारो-गृही तस्मिन् भवमागारिकम्, अध्यात्मादिभ्य इतीकण् प्रत्यय', इद चानेकभेद, देशविरतेश्चित्ररूपत्वात्, अनगारः-साधु', न विद्यते स्वस्वामिभावेनागारमस्येति व्युत्पत्ते', तस्मिन् भवमानगारिक चैव, पूर्ववदिकण्प्रत्ययः, आह-सम्यक्त्वसामायिकश्रुतसामायिके विहाय चारित्र-सामायिकस्य साक्षाद्भेदाभिधान किमर्थम् ?, उच्यते, तस्मिन् सति तयोर्नियमेन भाव इति ख्यापनार्थं, यद्वा चरम-त्वादस्य यथा भेद उक्त तथा शेपयोरपि वाच्य इति ज्ञापनार्थं ॥ साम्प्रतं मूलभाष्यकार श्रुतसामायिकमध्ययनरूपत्वात् व्याचिख्यासुस्तस्य भेदानाह—

अज्झयणपि य तिविहं सुत्ते अत्थे (य) तदुभए चेव। सेसेसुवि अज्झयणेसु होइ एसेव निज्जुत्ती॥१५०॥ (भाष्यं)

अध्ययनमपि च त्रिविध-सूत्रविषयमर्थविषयं तदुभयविषय च, अपिशब्दात् सम्यक्त्वसामायिकमप्यौपशमिकादिभे-दात् त्रिविधमिति ॥ प्रक्रान्तोपोद्घातनिर्युक्तेरशेषाध्ययनव्यापितां दर्शयति-'शेषेष्वपि' चतुर्विंशतिस्तवादिष्वन्येष्वध्य-यनेषु भवत्येषैव-उद्देशनिर्देशादिका निरुक्तिपर्यवसाना निर्युक्ति । आह-अशेषद्वारपरिसमाप्तावतिदेशो न्याय्य , किमर्थ

द्विरोधः, उक्त च-"ननु तिविहंतिविहेणं पच्चक्खाणे सुयमि गिहिणोऽवि। तं थूलवहादीणं न सव्वसावज्जजोगाणं ॥ १ ॥" ( वि २६८६ ) अपिच-यत्किञ्चिदप्रयोजनं काकमांसादिकं यदपि चाप्राप्यं मनुष्यक्षेत्राद्बहिर्दन्तिदन्तचित्रकचर्मादिकं तद्विशेषित वस्त्वधिकृत्य यदि त्रिविधं त्रिविधेनापि प्रत्याचष्टे तथापि न कश्चिद्दोषः, यथा स्वयंभूरमणसमुद्रादिमत्स्या मया न हन्तव्या त्रिविध त्रिविधेनेति प्रत्याचक्षाणस्य, यदिवा यो व्रतं प्रतिपत्तुकामः पुत्रसन्तत्यादिनिमित्त विलम्बं कुर्वन्नेकादशीप्रतिमां प्रतिपद्यते तत्समाप्त्यनन्तर चावश्यमेव व्रतं ग्रहीष्यति स त्रिविधं त्रिविधेनापि सर्वसावद्ययोगप्रत्याख्यानं कुर्वाणो न दोषभाग् भवति, ये पुन पूर्वारब्धानुज्झितसावद्यकर्म्मसन्तानः सन् सामायिकं करोति स त्रिविधं त्रिविधेन प्रत्याख्यानं कर्त्तुं न शक्नोति, तदनुमतिपरिणतेर्निवर्त्तयितुमशक्यत्वात्, आह च भाष्यकृत्-"जइ किंचिदप्पओयणमप्पप्पं वा विसेसिउं वत्थुं। पच्चक्खेज्ज न दोसो सयंभुरमणाइमच्छव ॥ १ ॥ जो वा निक्खमिउमणो पडिम पुत्ताइसततिनिमित्तं। पडिवज्जेज्ज तओ वा करेज्ज तिविहंपि तिविहेणं ॥ २ ॥ जो पुण पुव्वारद्धाणुज्झियसावज्जकम्मसताणो। तदणुमइपरिणति सो न तरइ सहसा नियत्तेउ ॥ ३ ॥" मिति ( विशे २६८७९ ) यद्यपि च गृहस्थस्य सामायिकं कुर्वतो न त्रिविधं त्रिविधेन प्रत्याख्यानं तथापि तद् गृहस्थेन परलोकार्थिना गृहस्थसामायिकमवश्यं कर्त्तव्यं, तस्यापि विशिष्टफलसाधकत्वात्, तथा चाह निर्युक्तिकृत्—

सामाइअम्मि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं बहुसो सामाइअं कुज्जा ॥ ८०१ ॥

सामायिके, तुशब्द एवकारार्थः, "तुः स्याद्भेदेऽवधारणे" इति वचनात्, सामायिके एव कृते सति यस्मात् श्रावकः

परम–प्रधान ज्येष्ठमित्येतत् ज्ञात्वा कुर्यात् बुधो–विद्वान् आत्महितम्–आत्मोपकारकम्, एतदेव परिपूर्ण सामायिकं, किमर्थमित्याह–'परार्थं' परो–मोक्ष, तस्याप्यपरस्य परस्याभावात्, तदर्थं, न तु सुरलोकाद्यवाप्त्यर्थं, अनेन निदानपरिहारमाह, परिपूर्णसामायिककरणशक्त्यभावे गृहस्थोऽपि गृहस्थसामायिक 'करेमि भंते ! सामाइय सावज्ज जोग पच्चक्खामि जाव नियम पज्जुवासामि दुविहं तिविहेणे'त्येव कुर्यात्, आह–तस्य सर्वं त्रिविधं त्रिविधेन प्रत्याचक्षाणस्य को दोष ?, उच्यते, प्रवृत्तकर्म्मारम्भानुमत्यनिवृत्त्या कारणसम्भव एव, तथापि तत्करणे भङ्गदोष', तथा चाह–

सव्वंति भाणिऊण विरई खलु जस्स सव्विआ नत्थि। सो सव्वविरइवाई चुक्कइ देसं च सव्वं च ॥ ७०१ ॥

'सव्वं'ति उपलक्षणमेतत्, तत एवं द्रष्टव्य–सर्वं सावद्य योगं प्रत्याख्यामि त्रिविधं त्रिविधेनेत्येवं भाणिऊण–अभिधाय विरति –निवृत्तिः, खलु सर्विका–सर्वा नास्ति, प्रवृत्तकर्मारम्भानुमतिसद्भावात्, स सर्वविरतिवादी 'चुक्कइ' इति भ्रश्यति 'देसं च सव्व वे'ति प्राकृतत्वात् पञ्चम्यर्थे द्वितीया, देशविरते सर्वविरतेश्च, देशविरतेरनभ्युपगमात्, सर्वविरतेरकरणात्, नन्वागमे गृहस्थस्यापि प्रत्याख्यानं त्रिविध त्रिविधेनोक्त, तथा च व्याख्याप्रज्ञप्तौ सूत्र–'समणोवासगस्स णं भंते ! पुव्वामेव थूले पाणाइवाए पच्चक्खाए भवति, से ण पच्छा पच्चाइक्खमाणे किं करेइ ?, गोयमा ! तीय पडिक्कमइ जाव एगविहेण वा पडिक्कमइ' इति, तत' कथं गृहस्थस्य सावद्ययोगानुमतिप्रत्याख्यानप्रतिषेध ?, उच्यते, यदिद सूत्रे गृहस्थस्यापि त्रिविध त्रिविधेन प्रत्याख्यानं तत् स्थूलप्राणातिपातमृषावादादिविषयं द्रष्टव्य, यथा कोऽपि सिंहसरभगजादीना वध कन्यादिविषयमलीकं त्रिविध त्रिविधेन प्रत्याख्यातीति, न पुन सामान्येन सावद्ययोगविषयं, प्रवृत्तकर्मारम्भानुमतेरवश्यभावात्, ततो न कश्चि-

द्विरोधः, उक्त च-"ननु तिविहंतिविहेणं पच्चक्खाणं सुयंमि गिहिणोऽवि। तं थूलवहादीणं न सव्वसावज्जजोगाणं ॥ १ ॥" ( वि २६८६ ) अपिच-यत्किञ्चिदप्रयोजनं काकमांसादिकं यदपि चाप्राप्य मनुष्यक्षेत्राद्बहिर्दन्तिदन्तचित्रकचर्मादिक तद्विशेषित वस्त्वधिकृत्य यदि त्रिविधं त्रिविधेनापि प्रत्याचष्टे तथापि न कश्चिद्दोषः, यथा स्वयम्भूरमणसमुद्रादिमत्स्या मया न हन्तव्याः त्रिविध त्रिविधेनेति प्रत्याचक्षाणस्य, यदिवा यो व्रतं प्रतिपत्तुकामः पुत्रसन्तत्यादिनिमित्तं विलम्बं कुर्वन्नेकादशीप्रतिमां प्रतिपद्यते तत्समाप्त्यनन्तरं चावश्यमेव व्रतं ग्रहीष्यति स त्रिविधं त्रिविधेनापि सर्वसावद्ययोगप्रत्याख्यानं कुर्वाणो न दोषभाग् भवति, ये पुन पूर्वारब्धानुज्झितसावद्यकर्म्मसन्तानः सन् सामायिकं करोति स त्रिविधं त्रिविधेन प्रत्याख्यानं कर्त्तुं न शक्नोति, तदनुमतिपरिणतेर्निवर्त्तयितुमशक्यत्वात्, आह च भाष्यकृत्-"जइ किंचिदप्पओयणमप्पप्पं वा विसेसिउ वत्थुं। पच्चक्खेज्ज न दोसो सयंभुरमणाइमच्छव्व ॥ १ ॥ जो वा निक्खमिउमणो पडिमं पुत्ताइ सततिनिमित्तं। पडिवज्जेज्ज तओ वा करेज्ज तिविहंपि तिविहेणं ॥ २ ॥ जो पुण पुव्वारद्धाणुज्झियसावज्जकम्मसताणो। तदणुमइपरिणाति सो न तरइ सहसा नियत्तेउ ॥ ३ ॥" मिति ( विशे २६८७-९ ) यद्यपि च गृहस्थस्य सामायिकं कुर्वतो न त्रिविधं त्रिविधेन प्रत्याख्यानं तथापि तद् गृहस्थेन परलोकार्थिना गृहस्थसामायिकमवश्य कर्त्तव्यं, तस्यापि विशिष्टफलसाधकत्वात्, तथा चाह निर्युक्तिकृत्—

सामाइअम्मि उ कए समणो इव सावओ हवइ जम्हा। एएण कारणेणं बहुसो सामाइअं कुज्जा ॥ ८०१ ॥

सामायिके, तुशब्द एवकारार्थः, "तुः स्याद्भेदेऽवधारणे" इति वचनात्, सामायिके एव कृते सति यस्मात् श्रावकः

परम–प्रधान ज्येष्ठमित्येतत् ज्ञात्वा कुर्यात् बुधो–विद्वान् आत्महितम्–आत्मोपकारकम्, एतदेव परिपूर्णं सामायिकं, किमर्थमित्याह–'परार्थं' परो–मोक्ष, तस्याप्यपरस्य परस्याभावात्, तदर्थं, न तु सुरलोकाद्यवाप्त्यर्थं, अनेन निदानपरिहारमाह, परिपूर्णसामायिककरणशक्त्यभावे गृहस्थोऽपि गृहस्थसामायिकं 'करेमि भंते ! सामाइयं सावज्जं जोगं पच्चक्खामि जाव नियमं पज्जुवासामि दुविहं तिविहेणं'त्येवं कुर्यात्, आह–तस्य सर्वं त्रिविधं त्रिविधेन प्रत्याचक्षाणस्य को दोष.?, उच्यते, प्रवृत्तकर्म्मारम्भानुमत्यनिवृत्त्या कारणसम्भव एव, तथापि तत्करणे भङ्गदोष', तथा चाह–

सव्वंति भाणिऊण विरई खलु जस्स सव्विआ नत्थि । सो सव्वविरइवाई चुक्कइ देसं च सव्वं च ॥ ७११ ॥

'सर्वं'ति उपलक्षणमेतत्, तत एव द्रष्टव्य–सर्वं सावद्यं योगं प्रत्याख्यामि त्रिविधं त्रिविधेनेत्येवं भाणिऊण–अभिधाय विरति –निवृत्तिः, खलु सर्वैका–सर्वा नास्ति, प्रवृत्तकर्मारम्भानुमतिसद्भावात्, स सर्वविरतिवादी 'चुक्कइ' इति भ्रश्यति 'देसं च सव्वं चे'ति प्राकृतत्वात् पञ्चम्यर्थे द्वितीया, देशविरते सर्वविरतेश्च, देशविरतेरनभ्युपगमात्, सर्वविरतेरकरणात्, नन्वागमे गृहस्थस्यापि प्रत्याख्यानं त्रिविध त्रिविधेनोक्त, तथा च व्याख्याप्रज्ञप्तौ सूत्र–'समणोवासगस्स ण भंते ! पुव्वामेव थूले पाणाइवाए पच्चक्खाए भवति, से ण पच्छा पच्चाइक्खमाणे किं कीरइ ?, गोयमा ! तीयं पडिक्कमइ जाव एगविहेण वा पडिक्कमइ' इति, तत कथं गृहस्थस्य सावद्ययोगानुमतिप्रत्याख्यानप्रतिषेध ?, उच्यते, यदिद सूत्रे गृहस्थस्यापि त्रिविध त्रिविधेन प्रत्याख्यानं तत् स्थूलप्राणातिपातमृषावादादिविषयं द्रष्टव्य, यथा कोऽपि सिंहसरभगजादीना वध कन्यादिविषयमलीक त्रिविधं त्रिविधेन प्रत्याख्यातीति, न पुन सामान्येन सावद्ययोगविषय, प्रवृत्तकर्मारम्भानुमतेरवश्यभावात्, ततो न कश्चि-

योग , तथा पर्याप्तसुप्तजन्मस्थितिवेदसञ्ज्ञाकषायायुषि च, तथा ज्ञानं योगोपयोगौ शरीरसंस्थानसंहननमानानि लेश्या परिणाम वेदना समुद्घातकर्म्म च, क्रियायोजना पूर्ववत्, तथा निर्वेष्टनोद्वर्त्तने आश्रवं करणानि तथा अलङ्कारान् तथा शयनासनस्थानचङ्क्रमतश्चाश्रित्य पर्यालोचनीयम्, क्व किं सामायिकमिति । अवयवार्थं तु प्रतिद्वार स्वयमेव वक्ष्यति–तत्रोर्ध्वलोकादिक्षेत्रमङ्गीकृत्य सम्यक्त्वादिसामायिका[दी]ना लाभादिभावमभिधित्सुराह—

सम्म-सुआणं लंभो उड्ढं च अहो य तिरियलोए य । विरई मणुस्सलोए विरयाविरई अ तिरिएसु ॥८०७॥

सम्यक्त्वश्रुतसामायिकयोर्लाभः–प्राप्ति , 'उड्ढं चे'ति ऊर्ध्वलोके च 'अहे य'त्ति अधोलोके च तिर्यग्लोके च, इयमत्र भावना–ऊर्ध्वलोके मेरुसुरलोकादिषु ये सम्यक्त्वं प्रतिपद्यन्ते तेषा श्रुताज्ञानमपि तदैव सम्यक्श्रुतरूपतया परिणमते इति द्वयोरपि सामायिकयोस्तत्र लाभसम्भवः, एवमधोलोकेऽपि महाविदेहगताधोलौकिकग्रामेषु नरकेषु च निसर्गतोऽधिगमाद्वा सम्यक्त्व प्रतिपद्यमानाना द्वयलाभो भावनीयः, एवं तिर्यग्लोकेऽपि, 'विरई मणुस्सलोगे'त्ति अत्र विरतिशब्देन सर्वविरतिसामायिकं गृह्यते, तच्च लाभापेक्षया मनुष्यलोके एव, नान्यत्र, मनुष्या एवास्य प्रतिपत्तार , न शेषा जन्तव इति भावना, क्षेत्रनियमं तु विशिष्टश्रुतविदो नाभिहितवन्त., सम्भावयाम' ततस्त्रिष्वपि लोकेषु, मेरावपि कथासु प्रव्रज्याप्रतिपत्तिश्रवणात्, 'विरयाविरई य तिरिएसु'त्ति विरताविरतिश्च देशविरतिसामायिकलक्षणा लाभविचारेऽपिशब्दस्य गम्यमानत्वात् तिर्यक्ष्वपि भवति मनुष्येषु च ।

पुव्वपडिवन्नतो पुण तीसुवि लोगेसु नियमतो तिण्ह । चरणस्स दोसु नियमा भयणिज्जा उड्ढलोगम्मि ॥८०८॥

मण इव भवति, प्रायोऽशुभयोगरहिततया श्रमण इव बहुतरकर्म्मनिर्ज्जरको भवतीति भाव', अनेन कारणेन बहुश'– नेकवार सामायिक कुर्यात् इति गाथार्थ ॥ किंच—

जीवो पमायबहुलो बहुसोऽवि य बहुविहेसु अत्थेसुं । एएण कारणेणं बहुसो सामाइयं कुज्जा ॥ ८०२ ॥

जीव प्रमादबहुल बहुश –अनेकधापि च बहुविधेषु अर्थेषु–शब्दादिषु, प्रमादवाश्च एकान्तेनाशुभबन्धक एव, अत'– नेन कारणेन तत्परिजिहीर्षया बहुश सामायिकं कुर्यात्, मध्यस्थो भूयादिति गाथार्थ' । सामायिक च मध्यस्थस्य । ामायिकवतो लक्षणमाह—

जो नवि वट्टइ रागे नवि दोसे दुण्ह मज्झयारम्मि । सो होइ उ मज्झत्थो सेसा सव्वे अमज्झत्था ॥ ८०३ ॥

यो नापि वर्त्तते रागे, नापि द्वेपे, किन्तु द्वयोरपि–रागद्वेपयो मध्यकारे–मध्ये, कारशब्दस्य प्राकृतलक्षणवशात स्वार्थे त्पन्नत्वात्, अपान्तराले इत्यर्थ', स भवति मध्यस्थ', मध्ये तिष्ठतीति मध्यस्थः–रागद्वेपापान्तरालवर्त्ती, शेपा सर्वे अम- यस्थाः ॥ गत कस्येति द्वारम्, अधुना क किं सामायिकमिति प्ररूपयितुकामो द्वारगाथात्रयमाह—

खित्त दिसा काल गइ भविअ सन्नि ऊसास दिट्ठि आहारे । पज्जत्त सुत्त जम्म ठिई वेअ सन्ना कसायाऽऽऊ ८०४

नाणे जोगुवओगे सरीर सठाण सघयण माणे । लेसा परिणामे वेअणा समुग्घाय कम्मे य ॥ ८०५ ॥

निव्वेढणमुव्वट्टे आसवकरणे तहा अलकारे । सयणासणठाणत्थे चक्कमंते अ किं कहिअ ? ॥ ८०६ ॥

आसा समुदायार्थ क्षेत्रदिक्कालगतिभव्यसञ्ज्ञिउच्छ्वासदृष्टिआहारकानङ्गीकृत्यालोचनीयम्, क किं सामायिकमिति

न्ताना स्कन्धानामवगाहेऽपि अधिकृतत्रयोदशप्रदेशावगाढस्कन्धत्वपरिणाममापन्नानामवगाहनासम्भवात्, उत्कर्षतस्त्वसङ्ख्यातप्रदेशावगाढमिति। सम्प्रति क्षेत्रदिक्प्रतिपादनार्थं रुचकवक्तव्यतामाह—

अट्ठपएसो रुअगो तिरिअं लोगस्स मज्झयारम्मि। एस पभवो दिसाणं एसेव भवे अणुदिसाणं ॥१॥( आचा ४२ )

तिर्यग्लोकस्य मध्यकारे—मध्येऽष्टप्रदेशक'—अष्टनभ प्रदेशात्मको रुचक', तथाहि—तिर्यग्लोकस्य मध्यभागे आयामविष्कम्भाभ्या रज्जुप्रमाणौ सर्वप्रतराणा क्षुल्लकौ द्वौ नभ'प्रदेशप्रतरौ, तयोश्च मेरुमध्यप्रदेशे मध्यं, तत्र च मध्ये उपरितनप्रतरस्य ये चत्वारो नभ'प्रदेशा ये चाधस्तनस्य चत्वारस्तेषामष्टानामपि गोस्तनाकाररूपतया व्यवस्थितानामाकाशप्रदेशानां समये रुचक इति परिभाषेति, एष रुचको दिशां—क्षेत्रदिशा पूर्वादीना प्रभवः—उत्पत्तिकारणम्, एष एव च भवति प्रभवोऽनुदिशां—क्षेत्रविदिशामाग्नेय्यादीनामिति ॥ सम्प्रत्यस्माच्च रुचकाद्दिशो विदिशश्च यथा भवन्ति तथा प्रतिपादयन्नाह—

दुपएसाइ दुरुत्तर एगपएसा अणुत्तरा चेव। चउरो चउरो य दिसा चउराइ अणुत्तरा दुन्नि॥ (आचा नि ४३)

सगडुद्धिसंठिआओ महादिसाओ हवंति चत्तारि ।

मुत्तावली अ चउरो दो चेव य हुंति रुअगनिभा ॥ ( आचा नि ४४ )

तस्मात् यथोक्तरूपात् रुचकात् बहिश्चतसृष्वपि दिक्षु प्रत्येकमादौ द्वौ द्वौ नभःप्रदेशौ भवतः, तदग्रतश्चत्वारश्चत्वार , तेषामपि पुरत' षड् षड्, ततोऽप्यग्रतोऽष्टावष्टावित्येवं द्वाभ्या प्रदेशाभ्यामारभ्य द्व्युत्तरवृद्धिः प्रत्येकं चतसृष्वपि दिक्षु परिभावनीया, तथा चाह—'दुपएसाइ दुरुत्तर' अत्र 'चउरो' इति सम्बन्ध', चतस्र' पूर्वादिका-महादिशो द्विप्रदेशादयो

त्रयाणा–सम्यक्त्वसामायिकदेशविरतिसर्वविरतिसामायिकानां पूर्वप्रतिपन्नका पुनर्नियमेन त्रिष्वपि लोकेषु विद्यन्ते, पण्डकवनादिष्वपि देशविरताना तिरश्चा सम्भवात्, चरणस्य–विरतिसामायिकस्य द्वयोः–अधोलोकतिर्यग्लोकयोः नियमात्–नियमेन पूर्वप्रतिपन्ना, भजनीया पुनरूर्ध्वलोके, कदाचिद् भवन्ति कदाचिन्नेति भाव', गतं क्षेत्रद्वारम्। अधुना दिग्द्वारमभिधित्सुर्दिक्स्वरूपप्रतिपादनार्थमाह—

नाम ठवणा दविए खित्तदिसा तावखित्त पन्नवए ।
सत्तमिआ भावदिसा सा होअट्ठारसविहा उ ( परूवणा तस्स कायव्वा ) ॥ ८०९ ॥

नामदिक् स्थापनादिक् द्रव्यदिक् क्षेत्रदिक् तापक्षेत्रदिक् प्रज्ञापकदिक् सप्तमी भावदिक्, तस्य नामस्थापना (दि) दिक्सप्तकस्य प्ररूपणा कर्त्तव्या, पाठान्तर 'सत्तमिया भावदिसा सा होइट्ठारसविहा उ' सप्तमी भावदिक् सा भवत्यष्टादशविधैवेति। तत्र नामस्थापने क्षुण्णे, द्रव्यदिक्स्वरूपप्रकटनार्थमाह–तेरसपएसियं खलु तावइएसुं भवे पएसेसुं । जं दव्वं ओगाढं जहन्नग त दसदिसाग ॥१॥ (विशे २६९८ आचा नि ४१) द्रव्यमेव च दशदिगुत्थापनहेतुत्वाद्दिक् द्रव्यदिक्, तच्च द्विधा–जघन्यत उत्कर्षतश्च, तत्र त्रयोदशप्रदेशिकं–त्रयोदशप्रदेशवत्, तावत्सु–त्रयोदशसु प्रदेशेषु यद्द्रव्यमवगाढ भवति तत् जघन्यतो दशदिक्प्रभवं, तच्चैवम्–एकैक प्रदेशो विदिक्षु, एते चत्वार, मध्ये त्वेक इत्येते पञ्च, तथा चतसृषु दिक्ष्वायतावस्थितौ



द्वौ द्वाविति, स्थापना–'एक्केक्को विदिसासु, मज्झे य, दिसासु आयया दो दो' इति, उत्कर्षतस्त्वनन्तप्रदेशात्मकं, तदपि च क्षेत्रमधिकृत्य जघन्यतस्त्रयोदशप्रदेशावगाढम्, एकैकस्मिन्नाकाशप्रदेशे द्व्यणुकादीनामनन्ताणुकपर्य-

न्ताना स्कन्धानामवगाहेऽपि अधिकृतत्रयोदशप्रदेशावगाढस्कन्धत्वपरिणाममापन्नानामवगाहनासम्भवात्, उत्कर्षतस्त्वसङ्ख्यातप्रदेशावगाढमिति। सम्प्रति क्षेत्रदिक्प्रतिपादनार्थं रुचकवक्तव्यतामाह—

अट्ठपएसो रुअगो तिरिअ लोगस्स मज्झयारम्मि। एस पभवो दिसाणं एसेव भवे अणुदिसाणं ॥१॥( आचा ४२ )

तिर्यग्लोकस्य मध्यकारे—मध्येऽष्टप्रदेशक —अष्टनभ प्रदेशात्मको रुचक., तथाहि—तिर्यग्लोकस्य मध्यभागे आयामविष्कम्भाभ्या रज्जुप्रमाणौ सर्वप्रतराणा क्षुल्लकौ द्वौ नभ प्रदेशप्रतरौ, तयोश्च मेरुमध्यप्रदेशे मध्यं, तत्र च मध्ये उपरितनप्रतरस्य ये चत्वारो नभ प्रदेशा ये चाधस्तनस्य चत्वारस्तेपामष्टानामपि गोस्तनाकाररूपतया व्यवस्थितानामाकाशप्रदेशानां समये रुचक इति परिभाषेति, एप रुचको दिशां—क्षेत्रदिशां पूर्वादीना प्रभवः—उत्पत्तिकारणम्, एप एव च भवति प्रभवोऽनुदिशां—क्षेत्रविदिशामाग्नेय्यादीनामिति ॥ सम्प्रत्यस्माच्च रुचकाद्दिशो विदिशश्च यथा भवन्ति तथा प्रतिपादयन्नाह—

दुपएसाइ दुरुत्तर एगपएसा अणुत्तरा चेव। चउरो चउरो य दिसा चउराइ अणुत्तरा दुन्नि॥ (आचा नि ४३)

सगड्ढिसंठिआओ महादिसाओ हवंति चत्तारि ।

मुत्तावली अ चउरो दो चेव य हुंति रुअगनिभा ॥ ( आचा नि ४४ )

तस्मात् यथोक्तरूपात् रुचकात् बहिश्चतसृष्वपि दिक्षु प्रत्येकमादौ द्वौ द्वौ नभःप्रदेशौ भवतः, तदग्रतश्चत्वारश्चत्वार., तेषामपि पुरतः पट्‌पट्, ततोऽप्यग्रतोऽष्टावष्टावित्येव द्वाभ्या प्रदेशाभ्यामारभ्य द्व्युत्तरवृद्धिः प्रत्येकं चतसृष्वपि दिक्षु परिभावनीया, तथा चाह—'दुपएसाइ दुरुत्तर' अत्र 'चउरो' इति सम्बन्धः, चतस्र' पूर्वादिका महादिशो द्विप्रदेशादयो

त्रयाणा–सम्यक्त्वसामायिकदेशविरतिसर्वविरतिसामायिकानां पूर्वप्रतिपन्नका पुनर्नियमेन त्रिष्वपि लोकेषु विद्यन्ते, पण्डकवनादिष्वपि देशविरताना तिरश्चा सम्भवात्, चरणस्य–विरतिसामायिकस्य द्वयोः–अधोलोकतिर्यग्लोकयोः नियमात्–नियमेन पूर्वप्रतिपन्ना', भजनीया' पुनरूर्ध्वलोके, कदाचिद् भवन्ति कदाचिन्नेति भाव', गतं क्षेत्रद्वारम्। अधुना दिग्द्वारमभिधित्सुर्दिक्स्वरूपप्रतिपादनार्थमाह—

नाम ठवणा दविए खित्तदिसा तावखित्त पन्नवए।

सत्तमिआ भावदिसा सा होअट्ठारसविहा उ ( परूवणा तस्स कायव्वा ) ॥ ८०९ ॥

नामदिक् स्थापनादिक् द्रव्यदिक् क्षेत्रदिक् तापक्षेत्रदिक् प्रज्ञापकदिक् सप्तमी भावदिक्, तस्य नामस्थापना (दि) दिक्सप्तकस्य प्ररूपणा कर्त्तव्या, पाठान्तर 'सत्तमिया भावदिसा सा होइट्ठारसविहा उ' सप्तमी भावदिक् सा भवत्यष्टादशविधैवेति। तत्र नामस्थापने क्षुण्णे, द्रव्यदिक्स्वरूपप्रकटनार्थमाह–तेरसपएसियं खलु तावइएसुं भवे पएसेसुं। जं दवं ओगाढं जहन्नग त दसदिसाग ॥१॥ (विशे २६९८ आचा नि ४१) द्रव्यमेव च दशदिगुत्थापनहेतुत्वाद्दिक् द्रव्यदिक्, तच्च द्विधा–जघन्यत उत्कर्षतश्च, तत्र त्रयोदशप्रदेशिकं–त्रयोदशप्रदेशवत्, तावत्सु–त्रयोदशसु प्रदेशेषु यद्द्रव्यमवगाढ भवति तत् जघन्यतो दशदिक्प्रभवं, तच्चैवम्–एकैकः प्रदेशो विदिक्षु, एते चत्वार., मध्ये त्वेक इत्येते पञ्च, तथा चतसृषु दिक्ष्वायतावस्थितौ



द्वौ द्वाविति, स्थापना–'एक्केको विदिसासु, मज्झे य, दिसासु आयया दो दो' इति, उत्कर्षतस्त्वनन्तप्रदेशात्मकं, तदपि च क्षेत्रमधिकृत्य जघन्यतस्त्रयोदशप्रदेशावगाढम्, एकैकस्मिन्नाकाशप्रदेशे द्व्यणुकादीनामनन्ताणुकपर्य-

अधिकृतत्रयोदशप्रदेशावगाढस्कन्धत्वपरिणाममापन्नानामवगाहनासम्भवात्, उत्कर्षतस्त्वस-
न्ताना स्कन्धानामवगाहेऽपि
ङ्ख्यातप्रदेशावगाढमिति। सम्प्रति क्षेत्रदिक्प्रतिपादनार्थं रुचकवक्तव्यतामाह—

अट्ठपएसो रुअगो तिरिअं लोगस्स मज्झयारम्मि। एस पभवो दिसाणं एसेव भवे अणुदिसाणं॥१॥( आचा ४२ )

तिर्यग्लोकस्य मध्यकारे—मध्येऽष्टप्रदेशक'—अष्टनभ प्रदेशात्मको रुचक', तथाहि—तिर्यग्लोकस्य मध्यभागे आयामविष्क-
म्भाभ्या रज्जुप्रमाणौ सर्वप्रतराणा क्षुल्लकौ द्वौ नभ'प्रदेशप्रतरौ, तयोश्च मेरुमध्यप्रदेशो मध्यं, तत्र च मध्ये उपरितनप्रतरस्य
ये चत्वारो नभ'प्रदेशा ये चाधस्तनस्य चत्वारस्तेपामष्टानामपि गोस्तनाकाररूपतया व्यवस्थितानामाकाशप्रदेशानां समये
रुचक इति परिभाषेति, एप रुचको दिशां—क्षेत्रदिशा पूर्वादीना प्रभवः—उत्पत्तिकारणम्, एप एव च भवति प्रभवोऽनुदिशां—
क्षेत्रविदिशामाग्नेय्यादीनामिति ॥ सम्प्रत्यस्माच्च रुचकाद्दिशो विदिशश्च यथा भवन्ति तथा प्रतिपादयन्नाह—

दुपएसाइ दुरुत्तर एगपएसा अणुत्तरा चेव। चउरो चउरो य दिसा चउराइ अणुत्तरा दुन्नि॥(आचा नि ४३)

सगडुद्धिसंठिआओ महादिसाओ हवंति चत्तारि ।

मुत्तावली अ चउरो दो चेव य हुंति रुअगनिभा ॥ ( आचा नि ४४ )

तस्मात् यथोक्तरूपात् रुचकात् बहिश्चतसृष्वपि दिक्षु प्रत्येकमादौ द्वौ द्वौ नभःप्रदेशौ भवतः, तदग्रतश्चत्वारश्च-
त्वार., तेपामपि पुरत' षट् षट्, ततोऽप्यग्रतोऽष्टावष्टावित्येव द्वाभ्या प्रदेशाभ्यामारभ्य द्व्युत्तरवृद्धिः प्रत्येकं चतसृष्वपि दिक्षु
परिभावनीया, तथा चाह—'दुपएसाइ दुरुत्तर' अत्र 'चउरो' इति सम्बन्ध', चतस्रः पूर्वादिका महादिशो द्विप्रदेशादयो

मूले, प्रत्येक यथोत्तरं द्विद्विप्रदेशवृद्धय, अत एवैताः सस्थानतः चिन्त्यमानाः शकटोद्धिसस्थाना प्रतिपत्तव्या', 'णगपण्सा अणुत्तरा चेव' अत्र 'चउरो य' इति द्वितीयपदेन सम्बन्धः, चतस्रः—आग्नेय्यादिका दिशो, विदिशामपि दिक्त्वाव्यभिचारात् उभयत्रापि सामान्येन दिसा इत्युक्त, एकप्रदेशाः पूर्वादिमहादिशा चतसृणा चतुर्ष्वन्तरालकोणेषु एकैकनभ प्रदेशनिष्पन्ना अनुत्तरा—यथोत्तर वृद्धिरहिता, अत एवैताः सस्थानतः परिभाव्यमाना मुक्तावलीसस्थिता', 'चउरादि अणुत्तरा दोन्नि' इति द्वे ऊर्ध्वाधोदिशौ चतुरादिके अनुत्तरे, तथाहि—ऊर्ध्व चतुरो नभःप्रदेशानादौ कृत्वा यथोत्तर वृद्धिरहितत्वात् चतुष्प्रदेशिकैव रुचकनिभा चतुरस्रदण्डाकारा एका दिग्भवति, अधोऽप्येवंप्रकारा द्वितीयेति ॥ सम्प्रत्येता एव सस्थानतो निरूपयति—चतस्र पूर्वादिका महादिशो भवन्ति शकटोद्धिसस्थिता, प्रदेशद्वयादारभ्य यथोत्तर प्रदेशद्विकवृद्धिभावात्, तथा चतस्र—आग्नेय्यादिका विदिशो मुक्तावल्य इव मुक्तावल्य', मुक्तावलीसस्थानस-स्थिता इत्यर्थ, एकैकनभ प्रदेशनिष्पन्नत्वात्, तथा द्वे ऊर्ध्वाधोदिशौ भवतो रुचकनिभे, चतुष्प्रदेशनिष्पन्नत्वात्, अत्र स्थापना ॥ आसा च दशानामपि दिशा नामानि प्रतिपादयन्नाह—इदग्गेई जम्मा य नेरई वारुणी अ वायव्वा । सोमा ईसाणाविअ विमला य तमा य वोद्धव्वा ॥ (आचा नि ४३) या रुचकात् विजयद्वारानुसारेण विनिर्गता दिक् सा ऐन्द्री-नामा, पूर्वेत्यर्थ, अस्या अनन्तर वामपार्श्वे आग्नेयी, तस्या अपि तथैवानन्तर याम्या, ततो नैर्ऋती, तदनन्तर वारुणी, ततो वायव्या, तत सोमा, उत्तरा इत्यर्थ, तदनन्तरमीशानी, एता अष्टावपि तिर्यग्दिशा, तत्रापि पूर्वा याम्या वारुणी सोमेति महादिश, रुचकादूर्ध्वविनिर्गता विमला, अधःप्रयायिनी तामसी, तथा चैतदेव व्याख्यानमाह—इदा य विजय-

दाराणुसारओ सेसया पयाहिणओ। अट्ठ य तिरियदिसाओ उड्ढं विमला तमा चाऽहो ॥१॥ ऐन्द्री दिक् विजयद्वारानुसारतः प्रतिपत्तव्या, यत्र विजयद्वार सा ऐन्द्रीति भावार्थ, शेषा सप्त ऐशानीपर्यन्तास्तस्या प्रदक्षिणातः-प्रादक्षिण्येन बोद्धव्या', ताश्च तथैव प्राग्भाविता., एताश्चाष्टावपि रुचकात् (तिर्यक्) प्रव्यूढत्वात् तिर्यग्दिश इति व्यवह्रियन्ते, रुचकादूर्ध्वं प्रवृत्ता विमला, रुचकस्याध प्रवृत्ता तमा इति। उक्ता क्षेत्रदिक्, सम्प्रति तापक्षेत्रदिक् वक्तव्या, तत्र तपन ताप सूर्यकिरणस्पर्शाज्जनित प्रकाशात्मक परिताप तदुपलक्षित क्षेत्रं तापक्षेत्रं तदेव दिक्, अथवा तापयतीति ताप -सविता तदनुसारेण क्षेत्रात्मिका दिक् तापक्षेत्रदिक्, सा च सूर्यायत्तत्वादनियता, तथा चाह-जेसि जत्तो सूरो उदेइ तेसि तई हवइ पुव्वा। तावक्खित्तदिसाओ पयाहिण सेसयाओ सि ॥१॥ (आचा नि ४१) येषा-भरतादिक्षेत्रनिवासिना मनुष्याणा यतो-यस्या दिशि सूर्य उदेति-उद्गच्छति सा तेषा पूर्वा भवति, पूर्वेति व्यवह्रियते, तासा चैवमनियताना पूर्वदिशा प्रदक्षिणं-प्रादक्षिण्येन शेषा अपि-आग्नेय्यादिकास्तापक्षेत्रदिश प्रतिपत्तव्या, एवं च सति सर्वेषामपि भरतैरावतपूर्वविदेहापरविदेहवास्तव्याना मनुष्याणा मेरुरुत्तरतो लवणसमुद्रो दक्षिणत, उक्ता तापक्षेत्रदिक्, साम्प्रत प्रज्ञापकदिग् वाच्या, तत्र प्रज्ञापयति-सूत्रार्थं प्ररूपयति शिष्येभ्य इति प्रज्ञापको-व्याख्याता तदाश्रयेण दिक् प्रज्ञापकदिक्, तत्स्वरूपनिरूपणार्थमाह—पन्नवओ जयभिमुहो सा पुव्वा सेसिआ पयाहिणओ। तस्सेवऽणुगन्तव्वा अग्गेआई दिसा नियमा ॥१॥ प्रज्ञापको यस्या दिशोऽभिमुखस्तिष्ठति सा पूर्वा, शेषास्त्वाग्नेय्यादिका दिशो नियमात् तस्यैव प्रज्ञापकस्य प्रदक्षिणात.-प्रादक्षिण्येनानुगन्तव्याः। उक्ता प्रज्ञापकदिक्, सम्प्रति भावदिग् वक्तव्या, सा चाष्टादशविधा, दिश्यते अयममुकः ससारीति यया सा दिक् भाव.-पृथिवीत्वादिलक्षणः पर्याय. स

मूले, प्रत्येक यथोत्तर द्विद्विप्रदेशवृद्धय, अत एवैता: सस्थानत: चिन्त्यमाना' शकटोद्धिसस्थाना प्रतिपत्तव्या', 'पगपएसा अणुत्तरा चेव' अत्र 'चउरो य' इति द्वितीयपदेन सम्बन्ध', चतस्र:—आग्नेय्यादिका दिशो, विदिशामपि दिक्त्वाव्यभिचारात् उभयत्रापि सामान्येन दिसा इत्युक्त, एकप्रदेशा: पूर्वादिमहादिशा चतसृणा चतुर्ष्वन्तरालकोणेषु एकैकनभ प्रदेशनिष्पन्ना अनुत्तरा—यथोत्तर वृद्धिरहिता, अत एवैता' सस्थानत: परिभाव्यमाना मुक्तावलीसस्थिता, 'चउरादि अणुत्तरा दोन्नि' इति द्वे ऊर्ध्वाधोदिशौ चतुरादिके अनुत्तरे, तथाहि—ऊर्ध्व चतुरो नभ प्रदेशानादौ कृत्वा यथोत्तर वृद्धिरहितत्वात् चतुष्प्रदेशिकैव रुचकनिभा चतुरस्रदण्डाकारा एका दिग्भवति, अधोऽप्येवंप्रकारा द्वितीयेति ॥ सम्प्रत्येता एव सस्थानतो निरूपयति—चतस्र पूर्वादिका महादिशो भवन्ति शकटोद्धिसस्थिता:, प्रदेशद्वयादारभ्य यथोत्तर प्रदेशद्विकवृद्धिभावात्, तथा चतस्र—आग्नेय्यादिका विदिशो मुक्तावल्य इव मुक्तावल्य', मुक्तावलीसस्थानसंस्थिता इत्यर्थ, एकैकनभ• प्रदेशनिष्पन्नत्वात्, तथा द्वे ऊर्ध्वाधोदिशौ भवतो रुचकनिभे, चतुष्प्रदेशनिष्पन्नत्वात्, अत्र स्थापना ॥ आसा च दशानामपि दिशा नामानि प्रतिपादयन्नाह—इंदग्गेई जम्मा य नेरई वारुणी अ वायवा । सोमा ईसाणाविअ विमला य तमा य बोद्धवा ॥ (आचा नि ४३) या रुचकात् विजयद्वारानुसारेण विनिर्गता दिक् सा ऐन्द्री—नामा, पूर्वेत्यर्थ., अस्या अनन्तर वामपार्श्वे आग्नेयी, तस्या अपि तथैवानन्तर याम्या, ततो नैर्ऋती, तदनन्तर वारुणी, ततो वायव्या, तत सोमा, उत्तरा इत्यर्थ, तदनन्तरमीशानी, एता अष्टावपि तिर्यग्दिशा, तत्रापि पूर्वा याम्या वारुणी सोमेति महादिश, रुचकादूर्ध्वविनिर्गता विमला, अध:प्रयायिनी तामसी, तथा चैतदेव व्याख्यानमाह—इदा य विजय-

हाराणुसारओ सेसया पयाहिणओ। अट्ठ य तिरियदिसाओ उड्ढ विमला तमा वाऽहो॥१॥ ऐन्द्री दिक् विजयद्वारानुसारतः प्रतिपत्तव्या, यत्र विजयद्वार सा ऐन्द्रीति भावार्थ , शेषा सप्त ऐशानीपर्यन्तास्तस्या प्रदक्षिणातः–प्रादक्षिण्येन बोद्धव्या , ताश्च तथैव प्राग्भाविता , एताश्चाष्टावपि रुचकात् (तिर्यक्) प्रव्यूढत्वात् तिर्यग्दिश इति व्यवह्रियन्ते, रुचकादूर्ध्व प्रवृत्ता विमला, रुचकस्याध• प्रवृत्ता तमा इति । उक्ता क्षेत्रदिक्, सम्प्रति तापक्षेत्रदिक् वक्तव्या, तत्र तपन ताप• सूर्यकिरणस्पर्शाज्जनित प्रकाशात्मक परिताप तदुपलक्षित क्षेत्रं तापक्षेत्र तदेव दिक्, अथवा तापयतीति ताप –सविता तदनुसारेण क्षेत्रात्मिका दिक् तापक्षेत्रदिक्, सा च सूर्यायत्तत्वादनियता, तथा चाह–जेसि जत्तो सूरो उदेइ तेसि तई हवइ पुव्वा। तावक्खित्तदिसाओ पयाहिणं सेसयाओ सि ॥१॥ (आचा नि ४१) येषा–भरतादिक्षेत्रनिवासिना मनुष्याणा यतो–यस्या दिशि सूर्य उदेति–उद्गच्छति सा तेषा पूर्वा भवति, पूर्वेति व्यवह्रियते, तासा चैवमनियताना पूर्वदिशा प्रदक्षिण–प्रादक्षिण्येन शेषा अपि–आग्नेय्यादिकास्तापक्षेत्रदिश प्रतिपत्तव्या•, एवं च सति सर्वेषामपि भरतैरावतपूर्वविदेहापरविदेहवास्तव्याना मनुष्याणा मेरुरुत्तरतो लवणसमुद्रो दक्षिणत , उक्ता तापक्षेत्रदिक्, साम्प्रत प्रज्ञापकदिग् वाच्या, तत्र प्रज्ञापयति–सूत्रार्थं प्ररूपयति शिष्येभ्य इति प्रज्ञापको–व्याख्याता तदाश्रयेण दिक् प्रज्ञापकदिक्, तत्स्वरूपनिरूपणार्थमाह—पन्नवओ जयभिमुहो सा पुव्वा सेसिआ पयाहिणओ। तस्सेवऽणुगन्तव्वा अग्गेआई दिसा नियमा॥१॥ प्रज्ञापको यस्या दिशोऽभिमुखस्तिष्ठति सा पूर्वा, शेषास्त्वाग्नेय्यादिका दिशो नियमात् तस्यैव प्रज्ञापकस्य प्रदक्षिणात –प्रादक्षिण्येनानुगन्तव्याः। उक्ता प्रज्ञापकदिक्, सम्प्रति भावदिग् वक्तव्या, सा चाष्टादशविधा, दिश्यते अयममुक• ससारीति यया सा दिक् भाव•–पृथिवीत्वादिलक्षणः पर्याय• स

एव दिङ् भावदिक्, सा च यथा भवत्यष्टादशविधा तथा प्रतिपादयति-पुढवि-जल-जलण-वाया मूल-खंध-ग्ग-पोर-
वीआ य। त्रि-ति-चउ-पंचिदिय तिरिय नारया देवसंघाया ॥ १ ॥ समुच्छिमकम्माकम्मभूमिग नरा तहंतरद्दीवा। भावदि-
सा दिस्सइ ज ससारी निययमेआहि ॥२॥ (आचा नि ) पृथिवी-मृत्तिका, जलम्-आपः, ज्वलनो-वैश्वानर , वात -पवन',
'मूलखधग्गपोरवीया य' इति वीजशब्दस्य प्रत्येकमभिसम्बन्धात् मूलवीजाः स्कन्धवीजा अग्रवीजाः पर्ववीजा इति द्रष्टव्य,
तत्र मूल वीज येषा ते मूलवीजाः-उत्पलकन्दादय , स्कन्धो वीजं येषा ते स्कन्धवीजाः-शल्लक्यादय', अग्रं वीजं येषा ते
अग्रवीजा -कोरण्टकादय , पर्व वीज येषा ते पर्ववीजाः-इक्ष्वादय', द्वीन्द्रिया-कृम्यादय', त्रीन्द्रिया-कीटिकादय', चतुरि-
न्द्रिया-भ्रमरादय , पञ्चेन्द्रिया -तिर्यञ्च सिंहसरभगोमहिष्यजादय', नारका-रत्नप्रभापृथिवीनारकादय', देवसङ्घाता-
भवनपत्यादय , नराश्चतुर्विधा , तद्यथा- सम्मूर्च्छिमाः कर्म्मभूमका अकर्म्मभूमकास्तथा आन्तरद्वीपा , तत्र सम्मूर्च्छि-
मा-वान्तादिसमुद्भवा., कर्म्मभूमका'-पञ्चदशकर्म्मभूमिजाता , अकर्म्मभूमका'-त्रिंशदकर्मभूमिजाताः ( अन्तरद्वीपकाः )
षट्पञ्चाशत्यन्तरद्वीपेषु जाता', एवमेता अष्टादशभेदा भावतः-पृथिव्यादिपर्यायतो दिशो भावदिश , कस्मात् दिक्त्वमे-
तासामत आह-यतः-यस्मात् ससारी नियतम्-अवश्यभावेन एताभिर्दिश्यते-अपदिश्यते तत एता दिश ॥ इह नाम-
स्थापनाद्रव्यदिग्भिरनधिकार एव, शेषासु यथासम्भवं सामायिकस्य प्रतिपद्यमानकः पूर्वप्रतिपन्नो वा वाच्य , तथा चाह
चूर्णिकृत्-"एत्थ पुण चउहिं दिसाहि अहिगारो-खेत्तदिसतावखेत्तपन्नवगभावदिसाहि, नामादी तिन्नि परूवणानिमित्तं"-
ति ॥ तत्र क्षेत्रदिशोऽधिकृत्य तावदाह—

पुघाइआसु महादिसासु पडिवज्जमाणओ होइ । पुवपडिवन्नओ पुण अन्नयरीए दिसाए उ ॥ ८१० ॥

पूर्वादिकासु क्षेत्रतो महादिक्षु विवक्षिते काले सर्वेपामपि सामायिकाना प्रतिपद्यमानको भवति, न न भवति, तत्सम्भवस्त्वक्ति, न पुनर्भवत्येव, कदाचित्तस्य तास्वभवनात्, पूर्वप्रतिपन्न पुनश्चतुर्णामपि सामायिकानामन्यतरस्या दिशि भवत्येव, पुन शब्दस्यैवकारार्थत्वात्, न पुनर्न भवति, एतदपि सामान्येनोक्त, विशेपतस्त्वेवमवगन्तव्यम्–त्रयाणा सम्यक्त्वसामायिकश्रुतसामायिकदेशविरतिमामायिकाना चतसृष्वपि पूर्वादिकासु महादिक्षु नियमेन पूर्वप्रतिपन्नकोऽस्ति, सर्वविरतिसामायिकस्य तु पूर्वापरदिशोर्नियमेन, दक्षिणोत्तरयोस्तु भजनया, एकान्तदुष्पमादिकाले भरतैरावतेपु सर्वविरतेरुच्छेदात्, विदिक्षु पुनश्चतसृष्वपि तथा ऊर्ध्वाधोदिग्द्वये च चतुर्णामपि सामायिकाना न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानक, तास्वेकप्रादेशिकत्वेन चतुष्प्रादेशिकत्वेन च जीवावगाहनानामसम्भवात्, स्पर्शनामात्र भवेदपि पुन, तथा चाह भाष्यकारः–"छिन्नावलिरुअगागिइदिसासु सामाइय न जं तासु । सुद्धासु नावगाहइ जीवो ताओ पुण फुसिज्जा ॥१॥" (वि २७०) तापक्षेत्रप्रज्ञापकदिशावधिकृत्याह–अट्ठसु चउण्ह नियमा पुवपवन्नो उ दोसु दुण्हेव । दुण्ह उ पुवपवन्नो सिअ नन्नो तावपन्नवए ॥२॥ तापक्षेत्रविपये प्रज्ञापकविपये च पुनरष्टसु पूर्वादिकासु दिक्षु चतुर्णामपि समायिकाना नियमात् पूर्वप्रतिपन्नोऽस्ति, प्रतिपद्यमानस्तु भाज्य –कदाचिद्भवति कदाचिनेति, तथा द्वयोः–ऊर्ध्वाधोरूपयोर्दिशो द्वयोः–सम्यक्त्वसामायिकश्रुतसामायिकयोरेव पूर्वप्रतिपन्नो नियमादस्ति, प्रतिपद्यमानकस्तु भाज्य इत्यर्थ, 'दोण्ह उ' इत्यादि, द्वयो पुन देशविरतिसामायिकसर्वविरतिसामायिकयोरूर्ध्वाधोदिशो स्यात्–भजनया पूर्वप्रतिपन्न, कदाचिद्भवति कदाचिन्नेनि, अन्यः पुन. प्रतिपद्य-

मानक सर्वथा नेति । भावदिशमधिकृत्याह–उभयाभावो पुढवाइएसु विगलेसु हुज्ज उ पवन्नो । पंचिंदियतिरिएसुं नियमा तिन्नि मिअ पवज्जे ॥१॥ नारगदेवाकम्मगअंतरदीवेसु दुण्ह भयणाओ । कम्मगनरेसु चउसु मुच्छेसु य उभयपडिसेहो ॥२॥ पृथिव्यादिपु–पृथिव्यप्तेजोवायुमूलबीजस्कन्धबीजाग्रबीजपर्वबीजेषु उभयाभाव चतुर्णामपि सामायिकाना, न पूर्वप्रतिपन्नो न प्रतिपद्यमानक, विकलेपु–द्वित्रिचतुरिन्द्रियेषु पूर्वप्रतिपन्नो भवेत्, 'व्याख्यानतो विशेषप्रतिपत्ति'रिति सम्यक्त्वसामायिकश्रुतसामायिकयो कदाचित्पूर्वप्रतिपन्नो भवेत, सास्वादनसम्यक्त्ववता तेषु मध्ये उत्पादसम्भवात्, प्रतिपद्यमानकस्तु नोपपद्यते, उपदेशश्रवणादिसामर्थ्ययोगात्, देशविरतिसर्वविरतिसामायिकयो पुनर्न प्रतिपन्नो नापि प्रतिपद्यमानक, पञ्चेन्द्रियतिर्यक्षु सर्वविरतिवर्ज्जाना त्रयाणामपि सामायिकाना पूर्वप्रतिपन्नो नियमादस्ति, नापि प्रतिपद्यमानक, तथा भवस्वाभाव्यात्, नारके देवेष्वकर्म्मभूमिजान्तरद्वीपजमनुष्येषु च द्वयोः सम्यक्त्वश्रुतसामायिकयो पूर्वप्रतिपन्नो नियमादस्ति, य पुन. प्रपद्यते स प्रतिपद्यमानकः, स भजनया–स्यात् कदाचिद्विवक्षिते काले कदाचिन्नेतिभाव, इतरयोस्तु–देशविरतिसर्वविरतिसामायिकयोर्न प्रतिपद्यमानकस्तथास्वाभाव्यात्, कर्म्मजनरेषु–कर्म्मभूमिजमनुष्येषु चतुर्णामपि सामायिकाना पूर्वप्रतिपन्नोऽस्त्येव, प्रतिपद्यमानकस्तु भाज्य, सम्मूर्च्छिमेषु तु मनुष्येषु चतुर्णामपि सामायिकाना विषये उभयप्रतिषेधो–न पूर्वप्रतिपद्यमानो नापि प्रतिपद्यमानक इति भाव ॥ गतं दिग्द्वारम्, इदानी कालद्वारमभिधित्सुराह—

सम्मत्तस्स सुअस्स य पडिवत्ती छव्विहम्मि कालम्मि । विरई विरयाविरई पडिवज्जइ दोसु तिसु वावि॥८११॥

इह कालः त्रिविध, तद्यथा–उत्सर्पिणीकाल, अवसर्प्पिणीकाल उभयाभावतोऽवस्थितश्च, तत्र भरतैरावतेषु प्रत्येक

त्रिंशतिसागरोपममानस्य कालचक्रस्य द्वौ मूलभेदौ–उत्सर्प्पिणी च अवसर्पिणी च, एकैका षड्विभागा, तत्रावसर्प्पिण्या सुषम-सुषमाख्य. प्रवाहतश्चतु सागरोपमकोटीकोटीप्रमाण प्रथम कालविभाग, द्वितीय सुषमाख्यस्त्रिसागरोपमकोटीकोटीमान, तृतीय सुषमदुष्षमाख्य सागरोपमद्वयकोटीकोटीमान, चतुर्थो दुष्षमसुषमाख्यो द्वाचत्वारिंशद्वर्षसहस्रन्यूनसागरोपमको-टीकोटीमान, पञ्चमो दुष्षमाख्य एकविंशतिवर्षसहस्रमान, षष्ठो दुष्षमदुष्षमाख्य, सोऽप्येकत्रिंशतिवर्षसहस्रमान., अय-मेव चोत्क्रमेणोत्सर्प्पिण्यामपि यथोत्तरसङ्ख्य कालक्रमो वेदितव्य, अवस्थितश्चतुर्विधस्तद्यथा–सुषम सुषमासुखप्रतिभाग. सुषमासुखप्रतिभाग सुषमदुष्षमासुखप्रतिभाग दुष्षमसुषमासुखप्रतिभागश्च, तत्र प्रथमो देवकुरूत्तरकुरुषु, द्वितीयो हरिवर्षरम्यकयो, तृतीयो हैमवतहैरण्यवतयोः, चतुर्थो महाविदेहेषु, तत्रोत्सर्प्पिण्यामवसर्पिण्या च प्रत्येकं षड्विधेऽपि कालविभागे सम्यक्त्वस्य श्रुतस्य च द्वयोरप्यनयो प्रतिपत्ति. सम्भवति, प्रतिपद्यमानक. सम्भवतीति भाव., स च प्रतिपद्यमानक सुषमसुषमादिषु देशन्यूनपूर्वकोट्यायु शेष एव प्रतिपद्यते, नाधिकायु.शेष, उक्तं च चूर्णौ–"सुसमसुसमा-दिसु पुव्वकोडिदेसूणाउसेसा पडिवज्जति"त्ति, पूर्वप्रतिपन्नकास्त्वेतयोर्द्वयोरपि सामायिकयोर्विद्यन्ते एव, तथा विरति-समग्रचारित्रलक्षणा विरताविरति–देशचारित्रात्मिका प्रतिपद्यते कश्चिद् द्वयो कालयोस्त्रिषु वा कालविभागेषु, इयमत्र भावना–उत्सर्प्पिण्या द्वयोः दुष्षमसुषमाया सुषमदुष्षमाया च, अवसर्प्पिण्या त्रिषु, तद्यथा–सुषमदुष्षमाया दुष्षमसुषमाया दुष्षमाया च, विवक्षिते काले सर्वविरतिसामायिकस्य देशविरतिसामायिकस्य च प्रतिपद्यमानक कदाचिद्भवति कदाचिन्न, पूर्वप्रतिपन्नस्तु विद्यत एव, 'दोसु तिसु वावी'त्यत्रापिशब्द. सम्भावने, स चैतत् सम्भावयति–संहरण प्रतीत्य पूर्वप्रतिप-

मानक सर्वथा नेति । भावदिशमधिकृत्याह-उभयाभावो पुढवाइएसु विगलेसु हुज्ज उ पवन्नो । पचिंदियतिरिएसु नियमा तिण्ह सिअ पवज्जे ॥१॥ नारगदेवाकम्मगअंतरदीवेसु दुण्ह भयणाओ । कम्मगनरेसु चउसु मुच्छेसु य उभयपडिसेहो ॥२॥ पृथिव्यादिषु-पृथिव्यप्तेजोवायुमूलबीजस्कन्धबीजाग्रबीजपर्वबीजेषु उभयाभाव' चतुर्णामपि सामायिकाना, न पूर्वप्रतिपन्नो न प्रतिपद्यमानक , विकलेषु-द्वित्रिचतुरिन्द्रियेषु पूर्वप्रतिपन्नो भवेत्, 'व्याख्यानतो विशेषप्रतिपत्ति'रिति सम्यक्त्वसामायिकश्रुतसामायिकयो कदाचित्पूर्वप्रतिपन्नो भवेत्, सास्वादनसम्यक्त्ववता तेषु मध्ये उत्पादसम्भवात्, प्रतिपद्यमानकस्तु नोपपद्यते, उपदेशश्रवणादिसामर्थ्ययोगात्, देशविरतिसर्वविरतिसामायिकयो. पुनर्न प्रतिपन्नो नापि प्रतिपद्यमानक , पञ्चेन्द्रियतिर्यक्षु सर्वविरतिवर्ज्जाना त्रयाणामपि सामायिकाना पूर्वप्रतिपन्नो नियमादस्ति, नापि प्रतिपद्यमानक , तथा भवस्वाभाव्यात्, नारके देवेष्वकर्म्मभूमिजान्तरद्वीपजमनुष्येषु च द्वयोः सम्यक्त्वश्रुतसामायिकयोः पूर्वप्रतिपन्नो नियमादस्ति, य पुन. प्रपद्यते स प्रतिपद्यमानकः, स भजनया-स्यात् कदाचिद्विवक्षिते काले कदाचिन्नेतिभाव , इतरयोस्तु-देशविरतिसर्वविरतिसामायिकयोर्न प्रतिपद्यमानकस्तथास्वाभाव्यात्, कर्म्मजनरेषु-कर्म्मभूमिजमनुष्येषु चतुर्णामपि सामायिकाना पूर्वप्रतिपन्नोऽस्त्येव, प्रतिपद्यमानकस्तु भाज्य , सम्मूर्च्छिमेषु तु मनुष्येषु चतुर्णामपि सामायिकाना विषये उभयप्रतिषेधो-न पूर्वप्रतिपद्यमानो नापि प्रतिपद्यमानक इति भाव ॥ गतं दिग्द्वारम्, इदानी कालद्वारमभिधित्सुराह—

सम्मत्तस्स सुअस्स य पडिवत्ती छव्विहम्मि कालम्मि । विरई विरयाविरई पडिवज्जइ दोसु तिसु वावि॥८११॥

इह कालः त्रिविध , तद्यथा-उत्सर्पिणीकाल. अवसर्पिणीकाल उभयाभावतोऽवस्थितश्च, तत्र भरतैरावतेषु प्रत्येक

प्रतिपद्यते, व्यवहारनयापेक्षयेत्थमुच्यते, नतु निश्चयत , केवलस्य सम्यक्त्वसामायिकस्य श्रुतसामायिकस्य वा प्रतिपत्तेर-सम्भवात्, तयो परस्परमनुगतत्वात्, तत एव प्रतिपत्तव्यम्–कदाचित्सम्यक्त्वश्रुतसामायिके प्रतिपद्यते कदाचिद्देशविरति कदाचित्सर्वविरतिमिति, इयमत्र भावना–भव्याश्चतुर्णामपि सामायिकाना यथायोग प्रतिपद्यमानका भजनया, पूर्वप्रतिपन्नारतु चतुर्णामपि सदैव, एव सञ्ज्यपि चतुर्णां सामायिकाना कदाचित्प्रतिपद्यते, तथा चाह–'सन्नि पडिवज्जे'इति अपिशब्दस्य गम्यमानत्वात् सञ्ज्यपि चतुर्णां सामायिकानामन्यतरत् विवक्षिते काले प्रतिपद्यते, भावना प्राग्वत्, पूर्वप्रतिपन्नकास्तु सञ्ज्ञिनश्चतुर्णामपि सामायिकाना यथायोगं सदैव लभ्यन्ते, 'पडिसेहो पुण असन्निमीसए' इति (प्रतिषेध पुनः) पूर्व-प्रतिपन्नान् प्रतिपद्यमानकांश्चाश्रित्य असञ्ज्ञिमिश्रके–सिद्धे, यतोऽसौ न सञ्ज्ञी नाप्यसञ्ज्ञी न भव्यो नाप्यभव्य· अतो मिश्र , उपलक्षणमेतत्, अभव्ये च चतुर्णामपि सामायिकाना प्रतिषेध·, पुन·शब्दो विशेषणार्थः, स चैतद्विशिनष्टि–असञ्ज्ञी सास्वादनसम्यक्त्वमाश्रित्य जन्मकाले सम्यक्त्वश्रुतसामायिकयो· पूर्वप्रतिपन्नो भवेत्, भवस्थकेवली मिश्र सम्यक्त्व-चारित्रसामायिकयो सिद्धो मिश्र· सम्यक्त्वसामायिकस्य पूर्वप्रतिपन्नो नियमादस्तीति ॥ साम्प्रतमुच्छ्वासद्वार दृष्टिद्वार च प्रतिपादयन्नाह—

ऊसासगनीसासग मीसय पडिसेह दुविह पडिवन्नो। दिट्ठीइ दो नया खलु ववहारो निच्छओ चेव ॥ ८१४॥

उच्छ्वसितीत्युच्छ्वासक , नि श्वसितीति नि·श्वासकः, आनप्राणपर्याप्तिपरिनिष्पन्न इत्यर्थ', स चतुर्णामपि सामायिकाना प्रतिपद्यमानक सम्भवति, कदाचिद्भवति कदाचिन्नेति भाव , पूर्वप्रतिपन्नकस्तु नियमादस्त्येवेति वाक्यशेष , 'मीसे पडि-

नक सर्वकालेषु सम्भवति, प्रतिभागकालेषु त्रिषु सम्यक्त्वश्रुतयो प्रतिपद्यमानको भजनया, पूर्वप्रतिपन्नस्तु नियमादस्ति, चतुर्थे तु दुष्षमसुषमासुखप्रतिभागे चतुर्विधस्यापि सामायिकस्य प्रतिपद्यमानक' सम्भवति, पूर्वप्रतिपन्नस्तु विद्यत एव,बाह्यद्वीपसमुद्रेष्वपि कालरहितेषु सम्यक्त्वश्रुतदेशविरतिसामायिकाना प्रतिपद्यमानको भजनया, पूर्वप्रतिपन्नस्तु नियमादस्ति, सर्वविरतिसामायिकस्यापि नन्दीश्वरादौ विद्याचारणादिगमने पूर्वप्रतिपन्नक. सम्भावनीय । गतं कालद्वारम्,इदानीं गतिद्वारमाह—

चउसुवि गईसु नियमा सम्मत्तसुअस्स होइ पडिवत्ती । मणुएसु होइ विरई विरयाविरई अ तिरिएसु ॥८१२॥

चतसृष्वपि गतिषु नारकतिर्यङ्नरामररूपासु सम्यक्त्वश्रुतसामायिकयोर्नियमात् प्रतिपत्तिर्भवति, न पुनर्न भवति, एव निषेधपर नियमग्रहण, न तु सदैव तत्प्रतिपत्तिरिति प्रतिपत्त्यर्थं, कदाचिदन्तरस्यापि तत्प्रतिपत्तेरिहैव वक्ष्यमाणत्वात्, अपिशब्द पृथिव्यादिषु गत्यन्तर्गतेषु न भवत्यपीति सम्भावयति, पूर्वप्रतिपन्नस्तु सदैव लभ्यते, तथा मनुष्येषु प्रतिपत्तिमङ्गीकृत्य भवति विरतिः–समग्रचारित्रात्मिका, किमुक्त भवति ?–मनुष्यगतौ सर्वविरतिसामायिकस्य प्रतिपद्यमानको भजनया सम्भवतीति, पूर्वप्रतिपन्नास्तु सदा सत्येव,विरताविरतिश्च–देशचारित्रात्मिका तिर्यक्षु प्रतिपत्तिमङ्गीकृत्य भवतीति वर्त्तते, अत्रापीयं भावना–तिर्यग्गतावपि देशविरतिसामायिकस्य प्रतिपद्यमानको भजनया, पूर्वप्रतिपन्नस्तु नियमादस्ति॥ सम्प्रति भव्यद्वार सञ्ज्ञिद्वार च प्रतिपिपादयिषुराह—

भवसिद्धिओ उ जीवो पडिवज्जइ सो चउण्हमन्नयर । पडिसेहो पुण असन्निमीसए सन्नि पडिवज्जे ॥८१३॥

भवे सिद्धिर्यस्यासौ भवसिद्धिको–भव्य , स चतुर्णामपि सम्यक्त्वसामायिकादीनामन्यतरत् एक द्वे त्रीणि सर्वाणि वा

हारकोऽपर्याप्तकश्च, तत्रानाहारकोऽपान्तरालगतौ सम्यक्त्वश्रुते अङ्गीकृत्य स्यात्–कदाचिद्विवक्षितकाले भवेत् कदाचिन्न पूर्वप्रतिपन्न , प्रतिपद्यमानस्तु नियमान्न सम्भवतीति वाक्यशेषः, केवली तु समुद्घातावस्थाया शैलेश्यवस्थाया वाऽनाहारक सम्यक्त्वसामायिकसर्वविरतिसामायिकयो पूर्वप्रतिपन्न कदाचित् स्यात्, प्रतिपद्यमानकस्तु नैव, सिद्धस्तु सम्यक्त्वसामायिकस्य प्रतिपन्नो नियमादस्ति, प्रतिपद्यमानको नैव, इतरेषा तु त्रयाणामपि सामायिकानामुभयथापि तस्य प्रतिषेध', अपर्याप्तोऽपि सम्यक्त्वश्रुतसामायिके अङ्गीकृत्य स्यात् सम्भवेत् पूर्वप्रतिपन्न , प्रतिपद्यमानकस्तु नियमान्नास्ति, देशविरतिसर्वविरतिसामायिकयो' पुनरुभयथापि तस्य प्रतिषेध ॥ सम्प्रति सुप्तजन्मरूपद्वारद्वयव्याचिख्यासयेदमाह—

निद्दाइ भावओऽविअ जागरमाणो चउण्हमन्नयर। अडय-पोअ-जराउय तिअ तिअ चउरो भवे कमसो॥८१६॥

इह सुप्तो द्विधा–द्रव्यसुप्तो भावसुप्तश्च, एव जाग्रदपि, तत्र द्रव्यसुप्तो निद्रया, भावसुप्तस्तु मिथ्यादृष्टिरज्ञानी, तथा द्रव्यजागरो निद्रारहित', भावजागर सम्यग्दृष्टि , तत्र निद्रया भावतोऽपि च जाग्रत् चतुर्णा सामायिकाना प्राग्वदन्यतरत् प्रतिपद्यमानः सम्भवतीति भाव , पूर्वप्रतिपन्नस्तु नियमादस्त्येवेति भावः, अपिशब्दो विशेषणे, स चैतद्विशिनष्टि–भावजागर सम्यक्त्वसामायिकश्रुतसामायिकयोर्व्यवहारनयमतेन तु प्रतिपद्यमानकोऽपि देशविरतिसर्वविरतिसामायिकयो पुनर्नयद्वयमतेनापि पूर्वप्रतिपन्नो नियमादस्ति, प्रतिपद्यमानकस्तु भाज्य , निद्रासुप्तस्तु चतुर्णामपि सामायिकाना पूर्वप्रतिपन्नो नियमादस्ति, न तु प्रतिपद्यमानको, निद्राप्रभावतस्तथारूपचित्तशुद्ध्यादिसामग्र्यसम्भवात्, भावसुप्तस्तूभयविकलः, तस्य मिथ्यादृष्टित्वात्, यदि निश्चयनयमतेन सम्यग्दृष्टि. सम्यक्त्व प्रतिपद्यते व्यवहारनयमतेन तु मिथ्यादृष्टिरतो व्यव-

मेर्' इति मिश्र खल्वानापानपर्याप्त्या अपर्याप्तो भण्यते, तत्र चतुर्णामपि सामायिकाना प्रतिपत्तिमङ्गीकृत्य प्रतिषेध, न मिश्रश्चतुर्णामपि सामायिकाना प्रतिपद्यमानक सम्भवतीति भाव, 'दुविह पडिवन्नो'त्ति स एव मिश्रो द्विविधस्य सामायिकस्य, सम्यक्त्वसामायिकस्य श्रुतसामायिकस्य चेत्यर्थ, प्रतिपन्नः–पूर्वप्रतिपन्नो देवादिर्जन्मकाले भवति, अथवा मिश्र'–सिद्ध, तत्र चतुर्णामपि सामायिकाना प्रतिपद्यमानस्य प्रतिषेध, सम्यक्त्वरहिताना तु त्रयाणा सामायिकाना पूर्वप्रतिपन्नस्य च, 'दुविह पडिवन्न'त्ति अत्र मिश्र शैलेशीगतोऽयोगिकेवली गृह्यते, तस्य शरीरव्यापाररहिततया उच्छ्वासनिःश्वासविकलत्वात् स द्विविधस्य सामायिकस्य-सम्यक्त्वचारित्रसामायिकरूपस्य पूर्वप्रतिपन्नो वेदितव्य'। दृष्टौ विचार्यमाणाया द्वौ नयौ खलु विचारकौ–व्यवहारनयो निश्चयनयश्च, एवकारोऽवधारणे, एतावेव द्वौ, न शेषाविति, तत्राद्यो यथा मतिज्ञानविचारे अज्ञानी ज्ञान प्रतिपद्यते इत्यभ्युपगतवान् तथेहापि सामायिकरहित सामायिक प्रतिपद्यते, निश्चयनयस्तु क्रियाकालनिष्ठाकालयोरभेदात् यथा ज्ञानी ज्ञान प्रतिपद्यते इति प्रतिपन्नवान् तथा सामायिकवान् सामायिक प्रतिपद्यते इत्यपि। उक्ते उच्छ्वासदृष्टिद्वारे, साम्प्रतमाहारकद्वार पर्याप्तद्वार च प्रतिपिपादयिषुराह—

आहारओ उ जीवो पडिवज्जइ सो चउण्हमन्नयर। एमेव य पज्जत्तो सम्मत्तसुए सिया इअरो ॥ ८१९ ॥

आहारयतीत्याहारक, स चतुर्णां सामायिकाना प्राग्वदन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्तु सर्वेषामपि नियमादस्त्येव, षड् पर्याप्ती परिसमाप्तवान् पर्याप्त, सोऽप्येवमेव प्रतिपत्तव्य, किमुक्त भवति?–चतुर्णां सामायिकानामन्यतरत् सामायिक प्रतिपद्यमान सम्भवति, पूर्वप्रतिपन्नस्तु चतुर्णामपि नियमात् विद्यते इति, 'समत्तसुए सिया इयरो'इति इतर –अना-

न्ध , चतुर्णामपि सामायिकाना प्रतिपद्यमानक सम्भवति, प्रतिपन्नश्च नियमादस्ति, ज्ञानावरणदर्शनावरणान्तरायमोहनीय-
जघन्यस्थितिकस्तु देशविरतिरहितस्य सामायिकत्रयस्य पूर्वप्रतिपन्नो लभ्यते, न तु प्रतिपद्यमानको, देशविरतिसामायिकस्य
तूभयविकल , घातिकर्म्मचतुष्टयजघन्यस्थितौ वर्त्तमान क्षपकः सूक्ष्मसम्परायादिर्भवति, न शेष , तत स यथोक्तस्वरूप
एव, वेदनीयायुर्नामगोत्रजघन्यस्थितिक पुन सम्यक्त्वसामायिकसर्वविरतिसामायिकयो पूर्वप्रतिपन्नोऽस्ति, नतु प्रतिपद्य-
मानक , श्रुतसामायिकदेशविरतिसामायिकयोस्तु न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकः, वेदनीयादिजघन्यस्थितिको हि
चरमसमये वर्त्तमानोऽयोगिकेवली, तत• स उक्तस्वरूप एव भवतीति, ससारापेक्षया त्वायु'कर्म्मजघन्यस्थितिचिन्ताया
क्षुल्लकभवोऽवाप्यते, तत्र च वर्त्तमानो जीवो निगोदादिश्चतुर्णामपि सामायिकाना न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानक ,
तस्य तथारूपपरिणामासम्भवात् ॥ सम्प्रति वेदद्वार सज्ञाद्वार कषायद्वार च व्याचिख्यासुराह—

चउरोऽवि तिविहवेए चउसुवि सन्नासु होइ पडिवत्ती । हिट्ठा जहा कसाएसु वन्निअं तहय इत्थंपि ॥८१८॥

चत्वार्यपि सामायिकानि त्रिविधवेदे–स्त्रीपुंनपुसकलक्षणे पूर्वप्रतिपन्नानि नियमत• सप्रति प्रतिपद्यमानानि च सम्भवन्तीति
ावयशेष', किमुक्त भवति ?–त्रिविधेऽपि वेदे चतुर्णामपि सामायिकाना विवक्षितकाले पूर्वप्रतिपन्ना नियमेन विद्यन्ते, प्रति-
ाद्यमानकास्तु भाज्या इति, अवेदक' सम्यक्त्वसर्वविरतिसामायिकयो पूर्वप्रतिपन्नो नियमेन लभ्यते, सयोगिकेवलिना
ादैव भावात्, श्रुतसामायिकस्य तु कदाचिल्लभ्यते कदाचिन्न, क्षीणवेदक्षपकसम्भवेऽवाप्यते, न शेषकालमिति भावः,
ातिपद्यमानकस्तु त्रयाणामपि न सम्भवति, देशविरतिसामायिकस्य तूभयविकलः । द्वार । तथा चतसृष्वपि सज्ञासु–आहा-

हारनयमताश्रयणे भावमुह सामायिकादीना प्रतिपत्ता सम्भवतीति प्रतिपत्तव्य । जन्म त्रिविधम्—अण्डजपोतजजरायुज-भेदात्, तत्र यथासङ्ख्य 'तिग तिग चउरो भवे कमसोत्ति' अण्डजा—हंसादयस्ते सर्वविरतिवर्ज्जाना त्रयाणा सामायिकाना विवक्षितकाले प्रतिपद्यमानका भाज्या, पूर्वप्रतिपन्नास्तु नियमत सन्ति, सर्वविरतिसामायिकस्य तूभयविकलास्तिर्यग्योनिकत्वात्, पोतजा—हस्त्यादयस्तेऽप्येवमेव, जरायुजा मनुष्या अपि, ततस्ते चतुर्णामपि सामायिकाना विवक्षिते काले प्रतिपद्यमानका भजनीया, पूर्वप्रतिपन्नास्त्ववश्यंभाविन, उपलक्षणमेतत्, तेन औपपातिका सम्यक्त्वश्रुतसामायिकयो प्रतिपद्यमानका सम्भवेयु, पूर्वप्रतिपन्नका नियमत, देशविरतिसर्वविरतिसामायिकयोस्तूभयविकला तथा भवस्वाभाव्यात् । सम्प्रति स्थितिद्वारमाह—

उक्कोसगट्ठिईए पडिवज्जंते अ नत्थि पडिवन्ने । अजहन्नमणुक्कोसे पडिवज्जंते अ पडिवन्ने ॥ ८१७ ॥

आयुर्वर्ज्जाना सप्ताना ज्ञानावरणीयादिकर्म्मप्रकृतीनामुत्कृष्टाया त्रिंशत्सागरोपमकोटीकोट्यादिमानाया स्थितौ वर्त्तमानो जीवश्चतुर्णामपि सामायिकाना 'पडिवज्जंते य नत्थि पडिवन्ने' इति प्रतिपद्यमानक प्रतिपन्नश्च नास्ति, तस्यातिसङ्क्लिष्टत्वेनोभयविकलस्वभावत्वात्, चशब्दस्य व्यवहित सम्बन्ध, आयुषस्तूत्कृष्टाया त्रयस्त्रिंशत्सागरोपमलक्षणाया स्थितौ वर्त्तमानोऽनुत्तर सुर प्रथमस्य सामायिकद्वयस्य पूर्वप्रतिपन्न एव, सप्तमपृथिवीनारकस्तु पूर्वप्रतिपन्नः प्रतिपद्यमानकश्च, देशविरतिसर्वविरतिसामायिकयोस्तूभयविकला तथा भवस्वाभाव्यात्, अजघन्योत्कृष्टस्थितिरेवाजघन्योत्कृष्ट, स्थितिशब्दलोपात्, अष्टानामपि कर्मणा मध्यमाया स्थितौ वर्त्तमान इत्यर्थ, स 'पडिवज्जते य पडिवन्ने' इति, अत्रापि चशब्दस्य व्यवहित सम्ब-

न्ध , चतुर्णामपि सामायिकाना प्रतिपद्यमानक' सम्भवति, प्रतिपन्नश्च नियमादस्ति, ज्ञानावरणदर्शनावरणान्तरायमोहनीय-
जघन्यस्थितिकस्तु देशविरतिरहितस्य सामायिकत्रयस्य पूर्वप्रतिपन्नो लभ्यते, न तु प्रतिपद्यमानको, देशविरतिसामायिकस्य
तूभयविकल , घातिकर्म्मचतुष्टयजघन्यस्थितौ वर्त्तमान' क्षपक' सूक्ष्मसम्परायादिर्भवति, न शेप , तत स यथोक्तस्वरूप
एव, वेदनीयायुर्नामगोत्रजघन्यस्थितिक पुन सम्यक्त्वसामायिकसर्वविरतिसामायिकयो पूर्वप्रतिपन्नोऽस्ति, नतु प्रतिपद्य-
मानक , श्रुतसामायिकदेशविरतिसामायिकयोस्तु न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानकः, वेदनीयादिजघन्यस्थितिको हि
चरमसमये वर्त्तमानोऽयोगिकेवली, तत स उक्तस्वरूप एव भवतीति, ससारापेक्षया त्वायु'कर्म्मजघन्यस्थितिचिन्ताया
क्षुल्लकभवोऽवाप्यते, तत्र च वर्त्तमानो जीवो निगोदादिश्चतुर्णामपि सामायिकाना न पूर्वप्रतिपन्नो नापि प्रतिपद्यमानक',
तस्य तथारूपपरिणामासम्भवात् ॥ सम्प्रति वेदद्वार सञ्ज्ञाद्वार कषायद्वार च व्याचिख्यासुराह—

चउरोऽवि तिविहवेए चउसुवि सन्नासु होइ पडिवत्ती । हिट्ठा जहा कसाएसु वन्निअ तह्य इह्यंपि ॥८१८॥

चत्वार्यपि सामायिकानि त्रिविधवेदे—स्त्रीपुनपुसकलक्षणे पूर्वप्रतिपन्नानि नियमतः सप्रति प्रतिपद्यमानानि च सम्भवन्तीति
वाक्यशेपः, किमुक्त भवति ?—त्रिविधेऽपि वेदे चतुर्णामपि सामायिकाना विवक्षितकाले पूर्वप्रतिपन्ना नियमेन विद्यन्ते, प्रति-
पद्यमानकास्तु भाज्या इति, अवेदक' सम्यक्त्वसर्वविरतिसामायिकयो· पूर्वप्रतिपन्नो नियमेन लभ्यते, सयोगिकेवलिना
सदैव भावात्, श्रुतसामायिकस्य तु कदाचिल्लभ्यते कदाचिन्न, क्षीणवेदक्षपकसम्भवेऽवाप्यते, न शेपकालमिति भावः,
प्रतिपद्यमानकस्तु त्रयाणामपि न सम्भवति, देशविरतिसामायिकस्य तूभयविकलः । द्वार । तथा चतसृष्वपि सन्नासु—आहा-

रभयमैथुनपरिग्रहरूपासु चतुर्विधस्यापि सामायिकस्य प्रतिपत्तिर्भवति, प्रतिपद्यमानक' सम्भवतीति भाव , पूर्वप्रतिपन्नस्तु नियमादस्त्येव । द्वार। तथा अधो यथा 'पढमिल्लुगाण उदए नियमा सजोयणा कसायाण'मित्यादिना कपायेपु वर्णित तथे हापि न्नणनीयम्, सङ्क्षेपार्थस्त्वयम्–सामान्येन कपायवान् चतुर्णामपि सामायिकाना पूर्वप्रतिपन्नो नियमादस्ति, प्रतिपद्यमानस्तु भाज्य , अकपायी तु छद्मस्थवीतरागो देशविरतिवर्जसामायिकत्रयस्य पूर्वप्रतिपन्न कदाचिल्लभ्यते कदाचिन्न, उपशान्तमोहादीनामन्तरस्यापि भावात्, प्रतिपद्यमानकस्तु नैव, देशविरतिसामायिकस्य तूभयविकल , सयोगिकेवल्यादिरकपायी सम्यक्त्वसर्वविरतिसामायिकयो पूर्वप्रतिपन्नो नियमतोऽस्ति, प्रतिपद्यमानको नैव, श्रुतदेशविरतिसामायिकयोरुभयविकल , गत द्वारत्रयम् । इदानीमायुर्ज्ञानरूपद्वारद्वयमभिधित्सुराह—

संखेज्जाऊ चउरो भयणा सम्मसुअऽसखवासाण । ओहेण विभागेण य नाणी पडिवज्जई चउरो ॥ ८१९ ॥

सङ्ख्येयायुर्मनुष्यश्चत्वारि सामायिकानि प्रतिपद्यमान सम्भवति, प्रतिपन्नस्तु नियमादस्त्येवेति वाक्यशेप , 'भयणा सम्मसुपसखवासाण'मिति असङ्ख्यवर्षाणाम्–असङ्ख्येयवर्षाणामसङ्ख्येयवर्षायुपा सम्यक्त्वश्रुतसामायिकयो , असङ्ख्येयवर्षायु' प्रतिपद्यमानक. कदाचिल्लभ्यते कदाचिन्नेति, पूर्वप्रतिपन्नस्तु नियमेन विद्यते, देशविरतिसर्वविरतिसामायिकयोस्तूभयविकल । द्वारम् । 'ओहेणे'त्यादि, ओघेन–सामान्येन निश्चयनयमधिकृत्य ज्ञानी चत्वार्यपि सामायिकानि प्रतिपद्यते,व्यवहारनयमतेन त्वज्ञानी सम्यक्त्वश्रुतसामायिके देशविरतिसर्वविरतिसामायिके तु ज्ञानी, पूर्वप्रतिपन्नस्तु ज्ञानी चतुर्णामपि सामायिकाना नियमादस्ति, विभागेन यदा ज्ञानी चिन्त्यते तदा मतिश्रुतज्ञानी युगपत् सम्यक्त्वश्रुत-

सामायिके प्रतिपद्यते, देशविरतिसर्वविरतिसामायिकयोस्तु प्रतिपद्यमानको भजनया, पूर्वप्रतिपन्नकश्चतुर्णामपि, अवधिज्ञानी
सम्यक्त्वश्रुतसामायिकयो पूर्वप्रतिपन्नस्तावन्नियमादस्ति, कदाचित् युगपत्प्रतिपद्यमानकोऽपि लभ्यते, यदा देवादिर्मिथ्यादृ-
ष्टि भवतीति (मिथ्यादृष्टि सन् सम्यग्दृष्टिर्भवति तदा सम्यक्त्वश्रुतसामायिकाभ्या युगपदवधिज्ञान लभते) देशविरतिसामा-
यिकस्य तु प्रतिपद्यमानको न घटते, देशविरतिर्हि मनुष्यस्य तिरश्चो वा, सर्वदेशविरत्यादिगुणत एवावधिज्ञान, प्रतिपन्नस्तु
द्वयोरपि नियमादस्ति, मन पर्यायज्ञानी देशविरतिरहितसामायिकत्रयस्य पूर्वप्रतिपन्न एव, न तु प्रतिपद्यमानक, युगपद्वा
सह तेन चारित्र प्रतिपद्यते तीर्थकृत्, उक्त च–"पडिवन्नम्मि चरित्ते, चउनाणी जाव छउमत्था"। भवस्थकेवली सम्य-
क्त्वचारित्रयो पूर्वप्रतिपन्नो, न प्रतिपद्यमानक, श्रुतदेशविरतिसामायिकयोरुभयविकल, सिद्धकेवली सम्यक्त्वसामायि-
कस्य पूर्वप्रतिपन्नो, न प्रतिपद्यमानक, इतरसामायिकत्रयस्य पुनर्न प्रतिपन्नो( द्यमानो ), नापि पूर्वप्रतिपन्न । साम्प्रत
योगोपयोगशरीरद्वाराणि प्रतिपादयन्नाह–

चउरोऽवि तिविह जोए उवओगदुगम्मि चउर पडिवज्जे। ओरालिए चउक्कं सम्मसुअ विउव्विए भयणा ॥८२०॥

चत्वार्यपि सामायिकानि सामान्यतस्त्रिविधे योगे–मनोवाक्कायलक्षणे प्रतिपत्तिमाश्रित्य विवक्षिते काले सम्भवन्ति, प्राक्-
प्रतिपन्नता त्वधिकृत्य विद्यन्ते एव, विशेपश्चिन्तायामौदारिककाययोगवति योगत्रये चत्वार्यपि सामायिकानि पूर्वप्रतिपन्नानि
नियमतः सन्ति, प्रतिपद्यमानानि तु भाज्यानि, वैक्रियकाययोगवति सम्यक्त्वश्रुते पूर्वप्रतिपन्ने नियमत, प्रतिपद्यमानके भाज्ये,
देशविरतिसर्वविरतिसामायिके तु प्रतिपद्यमाने न स्तः, पूर्वप्रतिपन्ने तु स्यातामपि, यथा अम्बडश्रावकविष्णुकुमारप्रभृतीनाम्,

रभयमैथुनपरिग्रहरूपासु चतुर्विधस्यापि सामायिकस्य प्रतिपत्तिर्भवति, प्रतिपद्यमानक' सम्भवतीति भाव , पूर्वप्रतिपन्नस्तु नियमादस्त्येव। द्वार। तथा अधो यथा 'पढमिल्लुगाण उदए नियमा सजोयणा कसायाण'मित्यादिना कषायेषु वर्णित तथे हापि वर्णनीयम् , सङ्क्षेपार्थस्त्वयम्—सामान्येन कषायवान् चतुर्णामपि सामायिकाना पूर्वप्रतिपन्नो नियमादस्ति, प्रतिपद्यमानस्तु भाज्य , अकषायी तु छद्मस्थवीतरागो देशविरतिवर्ज्जसामायिकत्रयस्य पूर्वप्रतिपन्न कदाचिल्लभ्यते कदाचिन्न, उपशान्तमोहादीनामन्तरस्यापि भावात्, प्रतिपद्यमानकस्तु नैव, देशविरतिसामायिकस्य तूभयविकल , सयोगिकेवल्यादिरकषायी सम्यक्त्वसर्वविरतिसामायिकयो पूर्वप्रतिपन्नो नियमतोऽस्ति, प्रतिपद्यमानको नैव, श्रुतदेशविरतिसामायिकयोरुभयविकल', गत द्वारत्रयम् । इदानीमायुर्ज्ञानरूपद्वारद्वयमभिधित्सुराह—

सखेज्जाऊ चउरो भयणा सम्मसुअऽसखवासाणं । ओहेण विभागेण य नाणी पडिवज्जई चउरो ॥ ८१९ ॥

सङ्ख्येयायुर्मनुष्यश्चत्वारि सामायिकानि प्रतिपद्यमान सम्भवति, प्रतिपन्नस्तु नियमादस्त्येवेति वाक्यशेष , 'भयणा सम्मसुयसखवासाण'मिति असङ्ख्यवर्षाणाम्—असङ्ख्येयवर्षाणामसङ्ख्येयवर्षायुषा सम्यक्त्वश्रुतसामायिकयो , असङ्ख्येयवर्षायु प्रतिपद्यमानक कदाचिल्लभ्यते कदाचिन्नेति, पूर्वप्रतिपन्नस्तु नियमेन विद्यते, देशविरतिसर्वविरतिसामायिकयोस्तूभयविकल' । द्वारम् । 'ओहेणे'त्यादि, ओघेन—सामान्येन निश्चयनयमधिकृत्य ज्ञानी चत्वार्यपि सामायिकानि प्रतिपद्यते,व्यवहारनयमतेन त्वज्ञानी सम्यक्त्वश्रुतसामायिके देशविरतिसर्वविरतिसामायिके तु ज्ञानी, पूर्वप्रतिपन्नस्तु ज्ञानी चतुर्णामपि सामायिकाना नियमादस्ति, विभागेन यदा ज्ञानी चिन्त्यते तदा मतिश्रुतज्ञानी युगपत् सम्यक्त्वश्रुत-

सामायिके प्रतिपद्यते, देशविरतिसर्वविरतिसामायिकयोस्तु प्रतिपद्यमानको भजनया, पूर्वप्रतिपन्नकश्चतुर्णामपि, अवधिज्ञानी सम्यक्त्वश्रुतसामायिकयो पूर्वप्रतिपन्नस्तावन्नियमादस्ति, कदाचित् युगपत्प्रतिपद्यमानकोऽपि लभ्यते, यदा देवादिर्मिथ्यादृष्टि भवतीति (मिथ्यादृष्टि सन् सम्यग्दृष्टिर्भवति तदा सम्यक्त्वश्रुतसामायिकाभ्या युगपदवधिज्ञान लभते) देशविरतिसामायिकस्य तु प्रतिपद्यमानको न घटते, देशविरतिर्हि मनुष्यस्य तिरश्चो वा, सर्वदेशविरत्यादिगुणत एवावधिज्ञान, प्रतिपन्नस्तु द्वयोरपि नियमादस्ति, मन पर्यायज्ञानी देशविरतिरहितसामायिकत्रयस्य पूर्वप्रतिपन्न एव, न तु प्रतिपद्यमानक , युगपद्वा सह तेन चारित्र प्रतिपद्यते तीर्थकृत्, उक्त च—"पडिवन्नम्मि चरित्ते, चउनाणी जाव छउमत्था" । भवस्थकेवली सम्यक्त्वचारित्रयो पूर्वप्रतिपन्नो, न प्रतिपद्यमानक , श्रुतदेशविरतिसामायिकयोरुभयविकल , सिद्धकेवली सम्यक्त्वसामायिकस्य पूर्वप्रतिपन्नो, न प्रतिपद्यमानक , इतरसामायिकत्रयस्य पुनर्न प्रतिपन्नो( द्यमानो ), नापि पूर्वप्रतिपन्न । साम्प्रत योगोपयोगशरीरद्वाराणि प्रतिपादयन्नाह—

चउरोऽवि तिविह जोए उवओगदुगम्मि चउर पडिवज्जे। ओरालिए चउक्कं सम्मसुअ विउव्विए भयणा ॥८२०॥

चत्वार्यपि सामायिकानि सामान्यतस्त्रिविधे योगे—मनोवाक्कायलक्षणे प्रतिपत्तिमाश्रित्य विवक्षिते काले सम्भवन्ति, प्राक्प्रतिपन्नता त्वधिकृत्य विद्यन्ते एव, विशेपचिन्तायामौदारिककाययोगवति योगत्रये चत्वार्यपि सामायिकानि पूर्वप्रतिपन्नानि नियमतः सन्ति, प्रतिपद्यमानानि तु भाज्यानि, वैक्रियकाययोगवति सम्यक्त्वश्रुते पूर्वप्रतिपन्ने नियमत , प्रतिपद्यमानके भाज्ये, देशविरतिसर्वविरतिसामायिके तु प्रतिपद्यमाने न स्तः, पूर्वप्रतिपन्ने तु स्यातामपि, यथा अम्बडश्रावकविष्णुकुमारप्रभृतीनाम्,

आहारककाययोगवति देशविरतिरहितानि त्रीणि सामायिकानि पूर्वप्रतिपन्नानि नियमतः सन्ति, प्रतिपद्यमानानि नैव, देशविरतिसामायिक तु नोभययथापि, तैजसकार्म्मणकाययोगे केवलेऽपान्तरालगतावाद्यसामायिकद्वय प्राक्प्रतिपन्नतामधिकृत्य भाज्य, प्रतिपद्यमान तु नास्ति, केवलिसमुद्घाते पुन सम्यक्त्वचारित्रसामायिके प्राक्प्रतिपन्ने नियमतो विद्येते, प्रतिपद्यमाने तु न स्त , देशविरतिसामायिक तूभयविकल, मनोयोगे केवले न किञ्चित्, तस्यैवाभावात्, एव वाग्योगेऽपि, काययोगेऽपि केवले न किञ्चित्, 'उभयाभावो पुढवाइएसु' इति वचनात्, कायवाग्योगद्वये तु सम्यक्त्वश्रुते प्राक्प्रतिपन्नतामधिकृत्य भवेता, द्वीन्द्रियादिषु जन्मकाले सास्वादनसम्यक्त्वसम्भवात्, प्रतिपद्यमाने तु न स्त , देशविरतिसर्वविरतिसामायिके उभयविकले । द्वारम् । 'उवयोगदुगमि चउरो पडिवज्जे' इति साकारानाकाररूपे उपयोगद्वये प्रत्येक चत्वार्यपि सामायिकानि प्रतिपद्यमानानि सम्भवन्ति, प्राक्प्रतिपन्नानि नियमत , आह—'सव्वातो लद्धीओ सागारोवयोगोवउत्तस्स भवती'-त्यागमवचनादनाकारोपयोगे सामायिकलब्धिविरोध , नैष दोष , तस्यागमवचनस्य प्रवर्द्धमानपरिणामजीवविषयत्वात्, अवस्थितौपशमिकपरिणामापेक्षया चानाकारोपयोगेऽपि सामायिकलब्धिप्रतिपादनमविरुद्ध, तथाहि—अतरकरणे चतस्रोऽपि सामायिकलब्धयो वर्ण्यन्ते, तस्मिश्चान्तरकरणे औपशमिक परिणामोऽवस्थितो, वृद्धिहान्यसम्भवात्, मिथ्यात्वोदयाभावाद्धि न परिणामस्य हानि , सम्यक्त्वपुद्गलोदयाभावाच्च न वृद्धि , तत सोऽवस्थितपरिणाम सन् सम्भवत्यनाकारोपयोगेऽपि लभमान सामायिकचतुष्टयमिति, आह च भाष्यकृत्—सव्वातो लद्धीतो जइ सागारोवयोगभावम्मि । इह कह-मुवयोगदुगे लब्भइ सामाइयचउक्क ?॥ २७३१-३०८९ विशे० ॥ सो किर नियमो परिवड्ढमाणपरिणामय पइ इह तु । जोऽव-

द्वियपरिणामो लभेज्ज स लभेज्ज वीएऽवि ॥ २७३२ ॥ उपयोगेऽनाकाररूपे इति शेष । पायं पवड्ढमाणो लभए सागारगह-
णया तेण । इयरो उ जइच्छाए उवसमसम्माइलाभंमि ॥ २७३३ ॥ ज मिच्छस्साणुदओ न हायए तेण तस्स परिणामो ।
ज पुण सयमुवसत न वड्ढए तेण परिणामो ॥ २७३४ ॥ ( विशेषा० ) इति द्वारम् । 'ओरालिए'इत्यादि, औदारिके
शरीरे सामायिकचतुष्क पूर्वप्रतिपन्न नियमतो लभ्यते, प्रतिपद्यमानक तु भाज्यं, सम्यक्त्वश्रुतयोर्वैक्रियशरीरे भजना, प्रति-
पत्तिमङ्गीकृत्य देवादि कदाचित्ते प्रतिपद्यते, कदाचिन्नेति, पूर्वप्रतिपन्नकस्तु नियमादस्ति, देशविरतिसर्वविरतिसामायि-
कयो' पुन पूर्वप्रतिपन्न कदाचिच्चारणश्रमणादे सम्भवात्, प्रतिपद्यमानकस्तु नैव, वैक्रियप्रवृत्तौ प्रमादभावात्, शेषश-
रीरविचारो योगद्वारानुसारतो भावनीय. ॥ सम्प्रति सस्थानादिद्वारत्रयप्रतिपादनार्थमाह—

सव्वेसुवि सठाणेसु लहइ एमेव सव्वसंघयणे । उक्कोसजहन्न वज्जिऊण माणं लभे मणुओ ॥ ८२१ ॥

सस्थान समचतुरस्रादि षोढा तेषु सर्वेष्वपि सस्थानेषु लभते-प्रतिपद्यते चत्वार्यपि सामायिकानि, चतुर्णामपि सामा-
यिकाना प्रतिपत्ता सम्भवतीति प्राक्प्रतिपन्नो नियमादस्ति, 'एवमेव सव्वसंघयणे' एवमेव सर्वसहननविषयो विचारो वेदि-
तव्य , षट्स्वपि वज्रर्षभनाराचादिषु सहननेषु चतुर्णामपि सामायिकाना प्रतिपत्ता विवक्षिते काले भाज्य , पूर्वप्रति-
पन्नस्तु नियमादस्ति। 'उक्कोसजहन्न वज्जिऊण माण लभे मणुओ' इति मीयते इति मानं-शरीरस्यावगाहना तत् जघ-
न्यम्-अङ्गुलासङ्ख्येयभागलक्षणम् उत्कृष्ट-त्रिगव्यूतप्रमाण वर्जयित्वा मध्यमे शरीरमाने वर्त्तमानो मनुजो लभते-प्रतिपद्य-
मान सम्भवति, चत्वारि सामायिकानीति प्रक्रमाद्गम्यते, पूर्वप्रतिपन्नस्तु नियमादस्ति, जघन्यावगाहनाया पुनर्वर्त्तमानो

गर्भजमनुष्य सम्यक्त्वश्रुतयो पूर्वप्रतिपन्न सम्भवति, नतु प्रतिपद्यमानक , उत्कृष्टावगाहनस्तु त्रिगव्यूतप्रमाण स्म्य-क्त्वश्रुतयो पूर्वप्रतिपन्न नियमादस्ति, प्रतिपद्यमानस्तु भाज्य , देशविरतिसर्वविरतिसामायिकयोस्तु द्वावपि जघन्यो-त्कृष्टावगाहनावुभयविकलो, नारकदेवा अपि जघन्यावगाहना सम्यक्त्वश्रुतयो पूर्वप्रतिपन्ना सम्भवन्ति, नतु प्रतिपद्य-मानका , मध्यमावगाहना उत्कृष्टावगाहनाश्च पूर्वप्रतिपन्ना नियमत , प्रतिपद्यमानका सम्भवास्पद, तिर्यक्पञ्चेन्द्रिया जघन्यावगाहना सम्यक्त्वश्रुतयो सम्भविन ,प्रतिपद्यमानकास्तु नैव, मध्यमावगाहना उत्कृष्टावगाहनाश्च यथासङ्ख्य त्रयाणा सर्वविरतिवर्जाना द्वयो सम्यक्त्वश्रुतसामायिकयो प्रतिपद्यमानका सम्भविन , पूवप्रतिपन्ना नियोगत । गत द्वारत्रयम्, अधुना लेश्याद्वारप्रतिपादनार्थमाह—

सम्मत्तसुअ सव्वासु लहइ सुद्धासु तीसु अ चरित्तं । पुव्वपडिवन्नओ पुण अन्नयरीए उ लेसाए ॥ ८२२ ॥

सम्यक्त्वं च श्रुत चेत्येकवद्भाव सम्यक्त्वश्रुतसामायिके कृष्णादिकासु शुक्लान्तासु षट्सु लेश्यासु लभते, प्रतिपद्य-मान सम्भवतीति भाव , चारित्र पुनर्देशविरतिलक्षण सर्वविरतिलक्षण वा शुद्धासु तेज प्रभृतिष्वेव, चशब्दस्यावधार-णार्थत्वात्, लभते इति वर्त्तते, एव प्रतिपद्यमानकमधिकृत्य लेश्याद्वार निरूपितम् , अधुना प्राक्प्रतिपन्नमधिकृत्याह—'पुव्वप-डिवन्नतो' इत्यादि, पूर्वप्रतिपन्नक पुनरन्यतरस्या लेश्याया कृष्णाद्यभिधानाया भवति, आह—मतिश्रुतज्ञानलाभचिन्ताया शुद्धासु तिसृषु तेज प्रभृतिषु प्रतिपद्यमानक उक्त , तत कथमिदानीं सर्वास्वभिधीयमान सम्यक्त्वश्रुतसामायिकयो प्रतिपत्ता न विरुध्यते ? इति, उक्त च—"नणु मइसुयाइलाभोऽभिहितो सुद्धासु तीसु लेसासु। सुद्धासु असुद्धासु य कहमिह सम्मत्तसु-

यलाभो ? ॥ १ ॥" ( २१४१ विशे ) अत्रोच्यते—प्राक् लेश्याद्रव्यसाचिव्यजनितात्मपरिणामरूपा भावलेश्यामधिकृत्य मतिश्रुतज्ञानलाभ उक्त , तत स तेज प्रभृतिष्वेव लेश्यासु घटते, इह त्ववस्थितकृष्णादिद्रव्यरूपा द्रव्यलेश्यामधिकृत्य सम्यक्त्वश्रुतयो प्रतिपद्यमानक उक्त , तत स कृष्णादिष्वपि लेश्यासु घटते, कृष्णादिद्रव्यरूपद्रव्यलेश्यायामवस्थितायामपि तेजोलेश्यादिद्रव्यसम्पर्कत प्रतिभागादिमात्रभावेन तेजोलेश्यादिपरिणामसम्भवतो विरोधाभावात् तथाहि— सप्तमपृथिवीनैरयिकादेराभवमवस्थितास्वपि कृष्णादिद्रव्यलेश्यासु तेजोलेश्यादिद्रव्यसम्पर्कत स्वस्वाकारभावमात्रमुपजायते, उक्त च प्रज्ञापनायाम्—'से णूण कण्हलेसा नीललेस पप्प नो तारूवत्ताए नो तावन्नत्ताए नो तारसत्ताए नो ताफासत्ताए भुज्जो भुज्जो परिणमइ ?, हता गोयमा ! किण्हलेसा नीललेस पप्प जाव नो परिणमइ, से केणट्ठेणं भते ! एव वुच्चइ किण्हलेसा नीललेस पप्प जाव नो परिणमइ ?, गोयमा ! आगारभावमायाए वा से सिया पलिभागमायाए वा से सिया, कण्हलेसा ण सा, नो खलु नीललेसा, तत्थ गया उस्सक्कइ, से एएणट्ठेण गोयमा ! एव वुच्चइ किण्हलेसा नीललेस पप्प जाव नो परिणमइ" अत्र आकार एव भाव आकारभाव , आकारभाव एवाकारभावमात्रा, मात्राशब्द खल्वाकारभावव्यतिरिक्तप्रतिबिम्बादिधर्म्मान्तरप्रतिषेधवाचक , तेन आकारभावमात्रयाऽसौ स्यान्नीललेश्या, नतु तत्स्वरूपापत्तित , तथा प्रतिरूपो भाग प्रतिभाग , प्रतिबिम्बमित्यर्थ , प्रतिभाग एव प्रतिभागमात्रा, अत्र मात्राशब्दो वास्तवपरिणामप्रतिषेधवाचक , तया प्रतिभागमात्रयाऽसौ नीललेश्या स्यात्, नतु तत्स्वरूपत , स्फटिक इवोपधानवशादुपधानरूप इति दृष्टान्त , तत स्वरूपेण कृष्णलेश्येवासौ, न नीललेश्या, किं तर्हि ?, तत्र गता उत्सर्पति, तत्र गता—तत्रस्था तत्स्वरूपस्था इत्यर्थ , नीललेश्यादिक

लेश्यान्तर प्राप्य उत्सर्प्पति–आकारभावं प्रतिविम्बभावं वा नीललेश्यादिसम्बन्धिनमासादयति, 'एव नीललेसा काउलेस पप्प जाव नीललेसा ण सा, नो खलु काउलेसा तत्थ गया उस्सक्कइ वा ओसक्कइ वा' तत्र गता उत्सर्प्पतीति, किमुक्त भवति?–स्वरूपस्थैव सती आकारभाव प्रतिभाग च कापोतलेश्यासम्बन्धिनमासादयतीति, अवसर्प्पति चेति नीललेश्यैव सती च कृष्णलेश्या प्राप्य तदाकारभावमात्रमासादयति, 'एव काउलेसा तेउलेस पप्प तेउलेसा पम्हलेस पप्प पम्हलेसा सुक्कलेस पप्प' भावार्थ सर्वत्रापि प्राग्वत्, एव किण्हलेसा नीललेस पप्प किण्हलेसा काउलेस पप्प एव जाव सुक्कलेस पप्प एवमेक्केकी मयाहिं चारिज्जइ' इति, कृष्णादिद्रव्यलेश्याना च तेजोलेश्यादिद्रव्यसम्पर्कतस्तदाकारभावादिमात्रोपपत्तौ तेजोलेश्यादि-परिणामहेतुतोपजायते, तेजोलेश्यादिपरिणामे च सम्यक्त्वादिलाभ इति सप्तमपृथिवीनैरयिकादेरपि सम्यक्त्वादिलाभो भावरूपा लेश्यामधिकृत्य तेज प्रभृतिष्वेव लेश्यासु द्रव्यलेश्यामधिकृत्य कृष्णादिकास्वपि, तत प्राक् मतिश्रुतज्ञानलाभो भावलेश्यामधिकृत्य तेजोलेश्यादिषु इह तु सम्यक्त्वादिलाभो द्रव्यलेश्यामपेक्ष्य कृष्णादिष्वप्यभिधीयमानो न विरुद्ध इति ॥ सम्प्रति परिणामद्वारप्रदर्शनार्थमाह—

वड्ढते परिणामे पडिवज्जइ सो चउण्हमन्नयर । एमेव वड्ढिअम्मिवि हायति न किंचि पडिवज्जे ॥ ८२३ ॥

परिणाम –अध्यवसायविशेष तस्मिन् शुभशुभतररूपतया वर्द्धमानपरिणामे प्रतिपद्यते, स वर्द्धमानपरिणामो जीवश्चतुर्णां सम्यक्त्वादिसामायिकानामन्यतरत् सामायिकं 'एवमेव' पूर्वोक्तन्यायेनान्तरकरणावस्थितेऽपि शुभे परिणामे चतुर्णामन्यतरत् सामायिक प्रतिपद्यते, 'हायन्ते न किंचि पडिवज्जे' इति हायमाने–परिभ्रंशमुपगच्छति शुभे परिणामे न किञ्चित्प्रति-

पद्यते सामायिक, सङ्क्लिष्टाध्यवसायत्वात्, प्राक्प्रतिपन्नस्तु त्रिष्वपि परिणामेषु चतुर्णामपि सामायिकाना भवतीति।
सम्प्रति वेदनाद्वार समुद्घातक्रियाद्वार च प्रतिपिपादयिपुराह—

दुविहाइ वेअणाए पडिवज्जइ सो चउण्हमन्नयर। असमोहओवि एमेव पुव्वपडिवन्नए भयणा ॥ ८२८ ॥

द्विविधायामपि सातासातरूपाया वेदनाया सत्या प्रतिपद्यते स जीवश्चतुर्णामपि सामायिकानामन्यतरत् सामायिक,
ाक्प्रतिपन्नस्तु नियमादस्ति, 'असमोहतोऽवि एवमेव'त्ति असमवहतोऽपि वेदनादिसमुद्घातरहितोऽपि एवमेव-पूर्वो-
न्यायेन वेदितव्य, सोऽपि चतुर्णा सामायिकानामन्यतरत् सामायिक प्रतिपद्यमानः सभवति, प्राक्प्रतिपन्नस्तु नियमा-
द्विद्यत इत्यर्थ, समवहतस्तु केवलिसमुद्घातादिना सप्तविधसमुद्घातेन न किञ्चित्प्रतिपद्यते, किन्तु 'पुव्वपडिवन्नए भयणा'
इति पूर्वप्रतिपन्नके समवहते विचारयितुमारब्धे भजना-समर्थना कार्या, यथा समवहता सामायिकद्वयस्य त्रयस्य वा प्राक्-
प्रतिपन्नो लभ्यते, तत्र केवलिसमुद्घाते सम्यक्त्वचारित्रसमायिकद्वयस्य पूर्वप्रतिपन्नक, शेपसमुद्घातेपु पुनः सम्यक्त्वश्रुत-
सामायिकद्वयस्य यदिवा सम्यक्त्वश्रुतदेशविरतिसामायिकत्रयस्य अथवा सम्यक्श्रुतसर्वविरतिसामायिकत्रयस्येति,
समुद्घातश्च सप्तविधो, यतोऽन्यत्रोक्त—"केवलिकसायमरणे वेयणा विउवितो य आहारे। सत्तविह समुग्घातो पण्णत्तो
ेयरागेहि ॥ १ ॥" गत द्वारद्वयम्। अधुना निर्वेष्टनद्वारप्रतिपादनार्थमाह—

दव्वेण य भावेण य निव्वेढ्ठितो चउण्हमन्नयर। नरएसु अणुवट्टे दुग तिग चउरो सिउवट्टे ॥ ८२९ ॥

निर्वेष्टनं द्विधा-द्रव्यतो भावतश्च, तत्र द्रव्यत कर्म्मप्रदेशविसघातरूप, भावत क्रोधादिहानिलक्षणं, तत्र सर्वमपि कर्म्म

लेश्यान्तर प्राप्य उत्सर्प्पति–आकारभाव प्रतिविम्बभावं वा नीललेश्यादिसम्बन्धिनमासादयति, 'एवं नीललेसा काउलेस पप्प जाय नीललेसा ण सा, नो खलु काउलेसा तत्थ गया उस्सक्कइ वा ओसक्कइ वा' तत्र गता उत्सर्प्पतीति, किमुक्त भवति?- स्वरूपस्थैव सती आकारभाव प्रतिभाग च कापोतलेश्यासम्बन्धिनमासादयतीति, अवसर्प्पति चेति नीललेश्यैव सती च कृष्णलेश्या प्राप्य तदाकारभावमात्रमासादयति, 'एव काउलेसा तेउलेस पप्प तेउलेसा पम्हलेस पप्प पम्हलेसा सुक्कलेस पप्प' भावार्थ सर्वत्रापि प्राग्वत्, एव किण्हलेसा नीललेस पप्प किण्हलेसा काउलेस पप्प एव जाव सुक्कलेस पप्प एवमेक्केकी सयाहिं चारिज्जइ' इति, कृष्णादिद्रव्यलेश्याना च तेजोलेश्यादिद्रव्यसम्पर्कतस्तदाकारभावादिमात्रोपपत्तौ तेजोलेश्यादि-परिणामहेतुतोपजायते, तेजोलेश्यादिपरिणामे च सम्यक्त्वादिलाभ इति सप्तमपृथिवीनैरयिकादेरपि सम्यक्त्वादिलाभो भावरूपां लेश्यामधिकृत्य तेज प्रभृतिष्वेव लेश्यासु द्रव्यलेश्यामधिकृत्य कृष्णादिकास्वपि, तत प्राक् मतिश्रुतज्ञानलाभो भावलेश्यामधिकृत्य तेजोलेश्यादिषु इह तु सम्यक्त्वादिलाभो द्रव्यलेश्यामपेक्ष्य कृष्णादिष्वप्यभिधीयमानो न विरुद्ध इति ॥

सम्प्रति परिणामद्वारप्रदर्शनार्थमाह—

वड्ढंते परिणामे पडिवज्जइ सो चउण्हमन्नयर । एमेव वड्ढिअम्मिवि हायति न किंचि पडिवज्जे ॥ ८२३ ॥

परिणाम –अध्यवसायविशेष. तस्मिन् शुभशुभतररूपतया वर्द्धमानपरिणामे प्रतिपद्यते, स वर्द्धमानपरिणामो जीवश्चतुर्णां सम्यक्त्वादिसामायिकानामन्यतरत् सामायिक 'एवमेव' पूर्वोक्तन्यायेनान्तरकरणावस्थितेऽपि शुभे परिणामे चतुर्णामन्यतरत् सामायिक प्रतिपद्यते, 'हायन्ते न किंचि पडिवज्जे' इति हायमाने–परिभ्रशमुपगच्छति शुभे परिणामे न किञ्चित्प्रति-

धिकृत्योभयथापि भवतीति, देवेष्वनुद्वृत्त सन् प्रथम सामायिकद्वयमाश्रित्य प्रतिपद्यमानक सम्भवति, पूर्वप्रतिपन्नस्तु
नियमादस्ति, 'चउक्क सिया उ उवट्टे' इति देवेभ्य उद्वृत्त सन् चतुष्कमाश्रित्योभयथापि लभ्यते, स्यात्शब्दग्रहणात्
त्रिक द्विक च, इयमत्र भावना-देवेभ्य उद्वृत्त· सन् तिर्यक्ष्वायात प्रथम सामायिकत्रिकं द्विक वा प्रतिपद्यमान प्राक्-
प्रतिपन्नश्च लभ्यते, मनुष्येष्वायात· सामायिकचतुष्टयमपीति, उद्वर्त्तमानक पुनरपान्तरालगतौ सर्वोऽप्यमरादि न किञ्चित्प्र-
तिपद्यते, प्राक्प्रतिपन्नस्त्वाद्ययो सामायिकयोर्लभ्यते ॥ आश्रवकरणद्वारमाह—

आसवओ व नीसवओ ॥८२८॥

नीसवमाणो जीवो पडिवज्जइ सो चउण्हमन्नयर। पुव्वपडिवन्नओ पुण सिअ

यत् सम्यक्त्वादिसामायिक प्रतिपद्यते तदावारकं कर्म्म मिथ्यात्वमोहनीयादिक निश्रावयन्-निर्जरयन् शेषकर्मानुव-
न्नपि जीव प्रतिपद्यते चतुर्णामन्यतरत्, किमुक्त भवति ?-चत्वार्यपि यथायोगमेव प्रतिपद्यते, पूर्वप्रतिपन्नक पुन
थादाश्रवको वा-वन्धक' नि श्रावको वा-निर्ज्जरक, वाशब्दस्य व्यवहित सम्बन्ध, आह-निर्वेष्टनद्वारादस्य क· प्रतिवि-
ेष ?, उच्यते, निर्वेष्टनं नाम कर्म्मप्रदेशविसङ्घातरूप, ततोऽनेन क्रियाकालो गृहीत, नि श्रवण तु निर्ज्जरा, ततोऽनेन निष्ठा-
लो गृहीत इति भेद, अथवा प्राक् सवेष्टनवक्तव्यताऽर्थतोऽभिहिता, इह तु साक्षादिति ॥ साम्प्रतमलङ्कारशयनासन-
मणद्वारकदम्बक व्याचिख्यासुराह—

उम्मुक्कमणुम्मुक्के उम्मुचते य केसअलकारे। पडिवज्जेज्जऽन्नयर सयणाईसुंपि एमेव ॥ ८२९ ॥

उन्मुक्ते-परित्यक्ते अनुन्मुक्ते-अपरित्यक्ते, अनुस्वारोऽलाक्षणिक, उन्मुचश्च केशालङ्कार-केशोपलक्षितः कटकके-

निवष्टयन् चत्वार्यपि सामायिकानि लभते, विशेषतस्तदावरण, तत्र ज्ञानावरण निर्वेष्टयन् श्रुतसामायिकमाप्नोति, मोहनीय तु निर्वेष्टयन् शेषत्रयमिति, भावतस्तु क्रोधाध्यवसायान् निर्वेष्टयन् चतुर्णामन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वरस्त्येव, सवेष्टयरस्त्यनन्तानुबन्ध्यादीन् न किञ्चित्प्रतिपद्यते, शेषकर्म्म त्वङ्गीकृत्योभयथापि ॥ गतं निर्वेष्टनद्वारमुद्वर्त्तनाद्वारमधुना–'नरग्सु अणुवट्टे' इत्यादि, नरकेष्वधिकरणभूतेषु अनुद्वर्त्तयन्, तत्रस्थ एवेत्यर्थ, पाठान्तरम्–'नरयाओ अणवुट्टे' इति तत्र नरकादनुद्वर्त्तयन्, तत्रैव स्थित सन्निति भाव, दुगति आद्यसामायिकद्वय प्रतिपद्यते, तदेवाधिकृत्य पूर्वप्रतिपन्नोऽप्यस्ति, तत उद्वृत्तस्तु कदाचित् तिर्यक्षूत्पन्न सर्वविरतिवर्ज्जं सामायिकत्रिक प्रतिपद्यते, मनुष्येषूत्पन्नश्चतुष्टयमपि ॥

तिरिएसु अणुवट्टे तिग चउक्क सिआ य उव्वट्टे । मणुएसु अणुवट्टे चउरो ति दुग तु उव्वट्टे ॥ ८२६ ॥

देवेसु अणुवट्टे दुगं चउक्क सिआ य उव्वट्टे । उव्वट्टमाणओ पुण सव्वोऽवि न किंचि पडिवज्जे ॥ ८२७ ॥

तिर्यक्षु गर्भव्युत्क्रान्तिकेषु सञ्ज्ञिषु अनुद्वृत्त सन् त्रिकम्–आद्य सामायिकत्रयमधिकृत्य प्रतिपत्ता लभ्यते, पूर्वप्रतिपन्नस्तु नियमादस्ति, 'चउक्क सिया उ उव्वट्टे' इति उद्वृत्तो–मनुष्यादिष्वायात सन् स्यात्–कदाचिच्चतुष्क, स्याद्ग्रहणादिदमपि द्रष्टव्य–स्यात्त्रिक स्याद्, द्विकमधिकृत्योभयथापि भवतीति, 'मणुएसु अणुवट्टे चउरो' इति मनुष्येष्वनुद्वृत्त सन् चत्वारि प्रतिपद्यमान' सम्भवति, उपलक्षणमेतत् त्रीणि द्विक वा, प्राक्प्रतिपन्नस्तु विकल्पत्रयेऽपि नियमादस्ति, 'ति दुगं तु उव्वट्टे' इति मनुष्येभ्य उद्वृत्तस्तिर्यङ्नरामरेष्वायातस्त्रीणि द्विक वाऽधिकृत्योभयथापि भवति, किमुक्त भवति?–देवनारकेषूत्पन्न आद्य सामायिकद्वयमधिकृत्य प्रतिपद्यमान पूर्वप्रतिपन्नो वा लभ्यते, तिर्यक्षु पुनरुत्पन्न सर्वविरतिवर्ज्जसामायिकत्रयम-

धिकृत्योभयथापि भवतीति, देवेष्वनुद्वृत्त· सन् प्रथमं सामायिकद्वयमाश्रित्य प्रतिपद्यमानक सम्भवति, पूर्वप्रतिपन्नस्तु
नियमादस्ति, 'चउक्क सिया उ उवट्टे' इति देवेभ्य उद्वृत्त सन् चतुष्कमाश्रित्योभयथापि लभ्यते, स्यात्शब्दग्रहणात्
त्रिक द्विकं च, इयमत्र भावना–देवेभ्य उद्वृत्तः सन् तिर्यक्ष्वायात प्रथम सामायिकत्रिकं द्विकं वा प्रतिपद्यमान प्राक्-
प्रतिपन्नश्च लभ्यते, मनुष्येष्वायात सामायिकचतुष्टयमपीति, उद्वर्त्तमानक पुनरपान्तरालगतौ सर्वोऽप्यमरादि न किञ्चित्प्र-
तिपद्यते, प्राक्प्रतिपन्नस्त्वाद्ययो सामायिकयोर्लभ्यते ॥ आश्रवकरणद्वारमाह—

नीसवमाणो जीवो पडिवज्जइ सो चउण्हमन्नयर । पुव्वपडिवन्नओ पुण सिअ आसवओ व नीसवओ ॥८२८॥

यत् सम्यक्त्वादिसामायिक प्रतिपद्यते तदावारकं कर्म्म मिथ्यात्वमोहनीयादिकं निश्रावयन्–निर्जरयन् शेषकर्मानुब-
न्नपि जीव प्रतिपद्यते चतुर्णामन्यतरत्, किमुक्तं भवति ?–चत्वार्यपि यथायोगमेवं प्रतिपद्यते, पूर्वप्रतिपन्नक· पुन
ादाश्रवको वा–बन्धक· नि श्रावको वा–निर्ज्जरक , वाशब्दस्य व्यवहित सम्बन्ध·, आह–निर्वेष्टनद्वारादस्य क प्रतिवि-
र ?, उच्यते, निर्वेष्टन नाम कर्म्मप्रदेशविसङ्घातरूप, ततोऽनेन क्रियाकालो गृहीत , नि श्रवण तु निर्ज्जरा, ततोऽनेन निष्ठा-
लो गृहीत इति भेद , अथवा प्राक् सवेष्टनवक्तव्यताऽर्थतोऽभिहिता, इह तु साक्षादिति ॥ साम्प्रतमलङ्कारशयनासन-
मणद्वारकदम्बक व्याचिख्यासुराह—

उन्मुक्कमणुम्मुक्के उम्मुचते य केसअलंकारे । पडिवज्जेज्जऽन्नयरं सयणाईसुंपि एमेव ॥ ८२९ ॥

उन्मुक्ते–परित्यक्ते अनुन्मुक्ते–अपरित्यक्ते, अनुस्वारोऽलाक्षणिक·, उन्मुंचंश्च केशालङ्कार–केशोपलक्षित· कटकके-

निर्वेष्टयन् चत्वार्यपि सामायिकानि लभते, विशेषतस्तदावरण, तत्र ज्ञानावरण निर्वेष्टयन् श्रुतसामायिकमाप्नोति, मोहनीयं तु निर्वेष्टयन् शेपत्रयमिति, भावतस्तु क्रोधाध्यवसायान् निर्वेष्टयन् चतुर्णामन्यतरत् प्रतिपद्यते, पूर्वप्रतिपन्नस्त्वनयत्वेन, सवेष्टयस्त्वनन्तानुबन्ध्यादीन् न किञ्चित्प्रतिपद्यते, शेपकर्म्म त्वङ्गीकृत्योभयथापि ॥ गत निर्वेष्टनद्वारमुद्वर्त्तनाद्वारमधुना–'नरगसु अणुवट्टे' इत्यादि, नरकेष्वधिकरणभूतेषु अनुद्वर्त्तयन्, तत्रस्थ एवेत्यर्थ, पाठान्तरम्–'नरयाओ अणवुट्टे' इति तत्र नरकादनुद्वर्त्तयन्, तत्रैव स्थित सन्निति भाव, द्विगति आद्यसामायिकद्वय प्रतिपद्यते, तदेवाधिकृत्य पूर्वप्रतिपन्नोऽप्यस्ति, तत उद्वृत्तस्तु कदाचित् तिर्यक्षूत्पन्न सर्वविरतिवर्ज्जं सामायिकत्रिक प्रतिपद्यते, मनुष्येपूत्पन्नश्चतुष्टयमपि ॥

तिरिएसु अणुवट्टे तिग चउक्क सिआ य उव्वट्टे। मणुएसु अणुवट्टे चउरो त्ति दुग तु उवट्टे ॥ ८२६ ॥

देवेसु अणुवट्टे दुगं चउक्क सिआ य उव्वट्टे। उव्वट्टमाणओ पुण सव्वोऽवि न किंचि पडिवज्जे ॥ ८२७ ॥

तिर्यक्षु गर्भव्युत्क्रान्तिकेषु सञ्ज्ञिषु अनुद्वृत्त सन् त्रिकम्–आद्य सामायिकत्रयमधिकृत्य प्रतिपत्ता लभ्यते, पूर्वप्रतिपन्नस्तु नियमादस्ति, 'चउक्क सिया उ उव्वट्टे' इति उद्वृत्तो–मनुष्यादिष्वायात सन् स्यात्–कदाचिच्चतुष्क, स्याद्ग्रहणादिदमपि द्रष्टव्य–स्यात्त्रिक स्याद्, द्विकमधिकृत्योभयथापि भवतीति, 'मणुएसु अणुवट्टे चउरो' इति मनुष्येष्वनुद्वृत्त सन् चत्वारि प्रतिपद्यमान सम्भवति, उपलक्षणमेतत् त्रीणि द्विक वा, प्राक्प्रतिपन्नस्तु विकल्पत्रयेऽपि नियमादस्ति, 'त्ति दुगं तु उवट्टे' इति मनुष्येभ्य उद्वृत्तस्तिर्यङ्नरामरेष्वायातस्त्रीणि द्विक वाऽधिकृत्योभयथापि भवति, किमुक्त भवति?–देवनारकेषूत्पन्न आद्य सामायिकद्वयमधिकृत्य प्रतिपद्यमान पूर्वप्रतिपन्नो वा लभ्यते, तिर्यक्षु पुनरुत्पन्न सर्वविरतिवर्ज्जसामायिकत्रयम-

यूरहारकङ्कणवस्त्राद्यलकार केशालङ्कार , त प्रतिपद्येतान्यतरच्चतुर्णां सामायिकाना, प्राक्प्रतिपन्नश्च उच्यते, अत्र भरतचक्रवर्त्यादय उदाहरण, एव 'शयनादिष्वपि' शयनासनचङ्क्रमणरूपेषु चतुर्षु द्वारेषु योजना कार्या, उन्मुक्तशयनोऽनुन्मुक्तशयन उन्मुचश्च चतुर्णामन्यतरत् सामायिक प्रतिपद्यते, प्राक्प्रतिपन्नश्च सम्भवति, एवमासनादिष्वपि योजना कार्या। तदयमुक्त विस्तरत , क्वेति द्वारम् ॥

इति श्रीमन्मलयगिर्याचार्यविहिताया आवश्यकवृत्तेः द्वितीयभागः ॥

इति श्री-आगमोदयसमिति-ग्रन्थोद्धारे ग्रन्थाङ्क ६०.

इति श्रीमन्मलयगिर्याचार्यविहिताया
आवश्यकवृत्तेर्द्वितीयभागः समाप्तः ॥

इति श्री-आगमोदयसमिति-ग्रन्थोद्धारे ग्रन्थाङ्कः ६०